# हाम्रो भनाइ

पाठ्यक्रम शिक्षण सिकाइको मूल आधार हो । पाठ्यपुस्तक विद्यार्थीमा अपेक्षित दक्षता विकास गर्ने एक मुख्य साधन हो । यस पक्षलाई दृष्टिगत गर्दै पाठ्यक्रम विकास केन्द्रले विद्यालय शिक्षालाई व्यावहारिक, समयसापेक्ष र गुणस्तरीय बनाउने उद्देश्यले पाठ्यक्रम तथा पाठ्यपुस्तकको विकास तथा परिमार्जन कार्यलाई निरन्तरता दिँदै आएको छ । आधारभूत शिक्षाले बालबालिकामा आधारभूत साक्षरता, गणितीय अवधारणा र सिप एवम् जीवनोपयोगी सिपको विकासका साथै व्यक्तिगत स्वास्थ्य तथा सरसफाइसम्बन्धी बानीको विकास गर्ने अवसर प्रदान गर्नुपर्छ । आधारभूत शिक्षाको माध्यमबाट बालबालिकाहरूले प्राकृतिक तथा सामाजिक वातावरणप्रति सचेत भई अनुशासन, सदाचार र स्वावलम्बन जस्ता सामाजिक एवम् चारित्रिक गुणको विकास गर्नुपर्छ । यसले विज्ञान, वातावरण र सूचना प्रविधिसम्बन्धी आधारभूत ज्ञानको विकास गराई कला तथा सौन्दर्यप्रति अभिरुचि जगाउनुपर्छ । शारीरिक तन्दुरुस्ती, स्वास्थ्यकर बानी एवम् सिर्जनात्मकताको विकास तथा जातजाति, धर्म, भाषा, संस्कृति, क्षेत्रप्रति सम्मान र समभावको विकास पनि आधारभूत शिक्षाका अपेक्षित पक्ष हुन् । देशप्रेम, राष्ट्रिय एकता, लोकतान्त्रिक मूल्यमान्यता तथा संस्कार सिकी व्यावहारिक जीवनमा प्रयोग गर्नु, सामाजिक गुणको विकास तथा नागरिक कर्तव्यप्रति सजगता अपनाउनु, स्तरअनुकूल व्यवहारकुशल सिपको प्रयोग गर्नु र दैनिक जीवनमा आइपर्ने व्यावहारिक समस्याहरूको पहिचान गरी समाधानका उपायको खोजी गर्नु पनि आधारभूत तहको शिक्षाका आवश्यक पक्ष हुन् । यी पक्षलाई दृष्टिगत गरी आधारभूत तह (कक्षा ४-५) को पाठ्यक्रम, २०७७ अनुरूप ऐच्छिक विषयका रूपमा संस्कृत भाषा (अस्माकं संस्कृतम्) विषयको यो पुस्तक विकास गरिएको छ । यो पुस्तक आधारभूत विद्यालय तहको कक्षा ४ मा नमुना पाठ्यपुस्तक तथा कार्यपुस्तकका रूपमा प्रयोग गरिने छ ।

संस्कृत भाषा (अस्माकं संस्कृतम्) विषयको यस पुस्तकको विकास उपप्रा. रोहिणीराज तिमिल्सिना, श्री शिवप्रसाद लामिछाने, श्री भीमप्रसाद खतिवडा र श्री पुरुषोत्तम घिमिरे सम्मिलित कार्यदलबाट भएको हो । यस नमुना विद्यार्थी कार्यपुस्तकको विकास कार्यमा श्री अणप्रसाद न्यौपाने, प्रा.डा. नुरापति पोखरेल, श्री टुकराज अधिकारी, श्री केशवप्रसाद भट्टराई, श्री ध्रुवप्रसाद भट्टराई, श्री नारायणप्रसाद घिमिरे, श्री गणेश तिमिल्सिना, श्री पर्वतराज घिमिरे र श्री निश्चल अधिकारीको विशेष योगदान रहेको छ । यस पुस्तकको लेआउट डिजाइन श्री सन्तोषकुमार दाहाल र चित्राङ्कन श्री देव कोइमीबाट भएको हो । यस पुस्तकको विकास तथा सम्पादन कार्यमा संलग्न सबैप्रति पाठ्यक्रम विकास केन्द्र धन्यवाद प्रकट गर्दछ ।

पाठ्यपुस्तकले विद्यार्थीमा निर्धारित सक्षमता विकासका लागि विद्यार्थीलाई सहयोग गर्ने छ । यसले विद्यार्थीको सिकाइमा सहयोग पुऱ्याउने एउटा महत्त्वपूर्ण र आधारभूत सामग्रीका रूपमा कक्षा क्रियाकलापबाट हुने सिकाइलाई मजबुत बनाउन सहयोग गर्ने छ । त्यसैले यो शिक्षकको सिकाइ क्रियाकलापको योजना नभई विद्यार्थीका सिकाइलाई सहयोग पुऱ्याउने सामग्री हो । यसका लागि यस पाठ्यपुस्तकलाई विद्यार्थीको सिकाइमा सहयोग पुऱ्याउने एउटा महत्त्वपूर्ण आधारका रूपमा बालकेन्द्रित, सिकाइकेन्द्रित, अनुभवकेन्द्रित, उद्देश्यमूलक, प्रयोगमुखी र क्रियाकलापमा आधारित बनाउने प्रयास गरिएको छ । सिकाइ र विद्यार्थीको जीवन्त अनुभवबिच तादात्म्य कायम गर्दै यसको सहज प्रयोग गर्न शिक्षकले सहजकर्ता, उत्प्रेरक, प्रवर्धक र खोजकर्ताका रूपमा भूमिकाको अपेक्षा गरिएको छ । यसलाई अझ परिष्कृत पार्नका लागि शिक्षक, विद्यार्थी, अभिभावक, बुद्धिजीवी एवम् सम्पूर्ण पाठकहरूको समेत विशेष भूमिका रहने हुँदा सम्बद्ध सबैको रचनात्मक सुझावका लागि पाठ्यक्रम विकास केन्द्र हार्दिक अनुरोध गर्दछ ।

वि.सं. २०७९

**पाठ्यक्रम विकास केन्द्र**
सानोठिमी, भक्तपुर

# विषयसूची

प्रथमः पाठः

# प्रकृति-वन्दना

**पाठप्रवेशः**

## प्रातर्वन्दनम्



पृथ्वी सगन्धा सरसास्तथापः
स्पर्शी च वायुर्ज्वलितं च तेजः ।
नभः सशब्दं महता सहैव
कुर्वन्तु सर्वे मम सुप्रभातम् ॥

(वामनपुराणम्)

पृथ्वी, जल, तेज, वायु र आकाश यी पाँचलाई पञ्चमहाभूत भनिन्छ । यी पाँच सृष्टिका कारक हुन् । पृथ्वीमा गन्ध गुण हुन्छ । जल (पानी)मा रस गुण हुन्छ । वायुमा स्पर्श गुण हुन्छ । तेज (प्रकाश) सधैँ उज्ज्वल हुन्छ । आकाशमा शब्द गुण रहन्छ । यी गुणहरूले युक्त पञ्चमहाभूतले महत्तत्त्वले सहित भएर मेरो बिहानी शुभ बनाऊन् ।

## मूलपाठः प्रकृतिवन्दना



१. प्राणद ! सर्वभूतानाम् ऊर्जाप्रकाशदायक ।
वायुदेव ! नमस्तुभ्यं सूर्यदेव ! नमोऽस्तु ते ॥

२. स्वास्थ्य-स्वच्छतयोर्दातः सर्वकिल्विषहारि हे ।
पिपासां हर मे नित्यं जलदेव ! नमोऽस्तु ते ॥

३. ददासि चाश्रयं भुक्तिं सिद्धिमृद्धिं ददासि मे ।
वसुधे ! मातृरूपे हे भूतत्रात्रि नमोऽस्तु ते ॥

४. नत्वाऽऽकाशं च वह्निं च प्रतिजानामि यद्दृढम् ।
सर्वप्राकृतवस्तूनि स्वच्छानि कारयाम्यहम् ॥

### प्रथमं पद्यम्

अन्वयः - (हे) सर्वभूतानाम् प्राणद वायुदेव ! तुभ्यम् (मम) नमः (अस्तु), (हे) ऊर्जा–प्रकाशदायक सूर्यदेव ! (मम) ते नमः अस्तु ।

सरलार्थः - हे वायुदेव ! त्वं सर्वेभ्यः प्राणिभ्यः प्राणवायुं ददासि । अतः त्वं सर्वेषां प्राणदाता असि । अहं त्वां नमस्करोमि । हे सूर्यदेव ! त्वं सर्वेभ्यः शक्तिं

प्रकाशं च यच्छसि। त्वम् ऊर्जायाः दायकः असि। तुभ्यम् अपि मम नमः अस्तु।

हे वायु–देवता ! तपाईँ सबै प्राणीलाई प्राणवायु (श्वास) दिनुहुन्छ। तपाईँलाई म नमस्कार गर्दछु। हे सूर्य–देवता ! तपाईँ ऊर्जा र प्रकाश दिनुहुन्छ। तपाईँलाई पनि मेरो नमस्कार छ।

## द्वितीयं पद्यम्

अन्वयः - हे स्वास्थ्य–स्वच्छतयोः दातः, सर्वकिल्विषहारि जलदेव ! (त्वम्) नित्यं मे पिपासां हर, (मम) ते नमः अस्तु।

सरलार्थः - हे जलदेव ! त्वं स्वास्थ्यस्य दाता असि। त्वं स्वच्छतायाः च दाता असि। त्वं सर्वविधानां किल्विषानाम् (मलानाम्) हर्ता च असि। त्वं सदैव मम पिपासायाः हरणं कुरु। तुभ्यं मम नमस्कारः अस्तु।

हे जल–देवता ! तपाईँ स्वास्थ्यका दाता हुनुहुन्छ। तपाईँ स्वच्छताको पनि दाता हुनुहुन्छ। तपाईँ सबै किसिमका फोहोर र विकारहरूलाई हरण गर्नुहुन्छ। तपाईँ सधैँ मेरो तिर्खा मेट्नुहोस्। तपाईँलाई मेरो नमस्कार छ।

## तृतीयं पद्यम्

अन्वयः - हे मातृरूपे भूतत्रात्रि वसुधे ! (त्वम्) मे आश्रयं ददासि, भुक्तिम्, ऋद्धिम्, सिद्धिं च ददासि, (मम) ते नमः अस्तु।

सरलार्थः - हे पृथ्वि ! त्वं मह्यम् आश्रयं ददासि। त्वं मह्यम् आहारं च ददासि। त्वं मह्यं सम्पत्तिम् (ऐश्वर्यम्) अपि यच्छसि। त्वं मह्यम् सफलतां च यच्छसि। अतः त्वं मम माता असि। त्वं प्राणिनां पालनं पोषणं च करोषि। अतः त्वं सर्वेषां मातृरूपा असि। तुभ्यं मम नमः अस्तु।

हे पृथ्वी–देवी ! तपाईँ मलाई आश्रय दिनुहुन्छ। तपाईँ मलाई भोजन पनि दिनुहुन्छ। तपाईँ मलाई सम्पत्ति र सफलता पनि दिनुहुन्छ। त्यसैले तपाईँ मेरी आमा हुनुहुन्छ। तपाईँ विश्वको पालन र पोषण गर्नुहुन्छ। त्यसैले तपाईँ सबैकी आमा हुनुहुन्छ। तपाईँलाई मेरो नमस्कार छ।

## चतुर्थ पद्यम्

अन्वयः - अहम् आकाशं वह्निं च नत्वा दृढं प्रतिजानामि च यत् सर्वप्राकृतवस्तूनि स्वच्छानि कारयामि।

सरलार्थः - अहम् आकाशदेवं नमामि । अहम् अग्निदेवं च नौमि । ततः अहं प्रकृतेः संरक्षणाय सुदृढां प्रतिज्ञां करोमि। अहं सर्वाणि प्राकृतवस्तूनि स्वच्छानि कारयामि। प्रदूषणकारीणि कार्याणि कदापि न करोमि। अहं प्राकृतवस्तूनाम् उपयोगं विवेकपूर्वकं करोमि।

म आकाश–देवतालाई नमस्कार गर्छु। अग्नि–देवतालाई पनि नमस्कार गर्छु। अनि म प्रकृतिको संरक्षण गर्ने दृढ प्रतिज्ञा गर्छु। म सबै प्राकृतिक वस्तुहरूलाई स्वच्छ राख्छु। प्रदूषण निम्त्याउने कुनै पनि काम कहिल्यै गर्दिनँ। म प्राकृतिक वस्तुहरूको उपयोग विवेक पुऱ्याएर गर्दछु।

### शब्दार्थः

| मूलशब्दः | संस्कृते पर्यायः | नेपाल्याम् अर्थः | आङ्लभाषायाम् अर्थः |
|---|---|---|---|
| प्राणदः | प्राणवायु प्रदः (प्राणं ददाति) | प्राणवायु दिने | Provider of Oxygen |
| सर्वः | सकलः | सबै | All |
| भूतम् | जन्तुः | प्राणधारी | A living being |

| | | | |
|---|---|---|---|
| ऊर्जा | शक्तिः/बलम् | शक्ति | Energy |
| प्रकाशः | आतपः/द्योतः | प्रकाश/घाम/ उज्यालो | Light |
| दायकः | दाता | दिनेवाला/दाता | A donor/Inheritor |
| वायुः | पवनः/वायुतत्त्वम् | हावा/वायुतत्त्व | Wind/Air |
| देवः | देवता | देवता | God/Deity |
| नमः | नमस्कारः | नमस्कार | Namaste |
| तुभ्यम् | तव कृते | तिमीलाई/ तपाईँलाई | To You |
| सूर्यः | दिवाकरः | सूर्य | The Sun |
| अस्तु | भवतु | होस् | Wish |
| ते | तुभ्यम्/तव | तपाईँलाई/तपाईँको | To You/Your |
| स्वास्थ्यम् | आरोग्यम् | स्वास्थ्य/निरोगिता | Health |
| स्वच्छता | शुद्धता | सफाइ | Cleanliness |
| किल्विषम् | कल्मषम्/पापम्/ रोगः | मयल/अपराध/पाप/ रोग | Dirt/Disease |
| हारी | हरणकर्ता/ विनाशकः | हरण गर्ने | Remover |
| पिपासा | तृषा | तिर्खा | Thirst |
| हर | अपनय/अपसारय | हरण गर/हटाऊ | Remove |
| नित्यम् | सततम्/ अनवरतम् | सधैँ/निरन्तर | Always |
| जलम्/ आपः | वारि/पानीयम् | पानी | Water |
| ददासि | यच्छसि | दिन्छौ | You give |

| | | | |
|---|---|---|---|
| आश्रयः | आधारः | आश्रय | Shelter/Support |
| भुक्तिः | आहारः/भोजनम् | आहार/भोजन | Food |
| सिद्धिः | साफल्यम् | सफलता | Success |
| ऋद्धिः | सम्पत्तिः/ऐश्वर्यम् | सम्पत्ति/सम्पन्नता | Prosperity |
| मे | मह्यम्/मम | मलाई/मेरो | To me/My |
| वसुधा/ पृथ्वी | धर्ती/धरा | पृथिवी | The Earth |
| मातृरूपा | जननीस्वरूपा | आमाको रूपमा रहेकी | As a Mother |
| विश्वम्भरा | पृथिवी | विश्वलाई पालन–पोषण गर्ने पृथिवी | The Earth |
| नत्वा | नमनं कृत्वा | नमस्कार गरेर | By saluting |
| आकाशः/ नभः | गगनम्/अम्बरम् | आकाश | The sky |
| च | अपि | पनि/र | And/Also |
| वह्निम् | अग्निः | आगो | Fire |
| प्रतिजानामि | प्रतिज्ञां करोमि | प्रतिज्ञा गर्छु | I promise |
| दृढम् | कठिनम्/ स्थिरम् | बलियो/स्थिर/दृढ | Steady/ Fixed/ Strong |
| प्राकृतः | प्रकृतेः भवः/ प्राकृतिकः | प्राकृतिक | Natural |
| वस्तु | पदार्थः/द्रव्यम् | वस्तु/चिज | An existing thing |
| स्वच्छम् | अतिनिर्मलम् | स्वच्छ | Clean/Pure |
| कारयामि | विधापयामि | बनाउँछु | I make |

| | | | |
|---|---|---|---|
| सगन्धा | गन्धेन सहिता/गन्धवती | गन्धले सहित/गन्धले युक्त | Fragrant |
| सरसाः | रसेन सहिताः/रसवत्यः | रसले सहित | Juicy/With taste |
| स्पर्शी | स्पर्शवान् | स्पर्श गुणले युक्त | With the quality of touch |
| ज्वलितम् | उज्ज्वलः | बलेको/चम्किलो | Burnt/Shining |
| तेजः | दीप्तिः/ अग्नितत्त्वम् | तेज/प्रकाश/ अग्नितत्त्व | Brightness/Fire |
| सशब्दम् | शब्देन सहितम्/शब्दवत् | शब्द गुणले युक्त | With the sound |
| महता सहैव | महत्तत्त्वेन सहितम् | महत्तत्त्वले सहित भएर | With basic elements |
| कुर्वन्तु | विदधतु | गरून्/बनाऊन् | Wish they do |
| सुप्रभातम् | शुभसूचकः प्रातःकालः | शुभ बिहानी | Good morning |
| पञ्च–महाभूतानि | पृथ्वी–जल–तेजो–वाय्वाकाशरूपाणि पञ्चतत्त्वानि | सृष्टिको कारकका रूपमा रहेका पाँच तत्त्वहरू– पृथिवी, जल, तेज, वायु र आकाश | Five basic elements of the nature- Earth, Water, Fire, Air and Space |

## अभ्यासः

### श्रवणं भाषणं च

१. शिक्षकमुखात् श्रुत्वा पदानि अनूच्चारयत

प्रतिजानामि, यद्दृढम्, सर्वभूतानाम्, प्राकृतवस्तूनि, वनिम्, नमोऽस्तु, ऋद्धिम्, किल्विषहारि, स्वास्थ्यस्वच्छतयोः, मातृरूपे ।

२. पाठस्य प्रातर्वन्दनश्लोकं शिक्षकमुखात् श्रुत्वा लयम् अनुसृत्य अनुवाचयत ।

३. अधस्तनं पद्यं सख्या सह उच्चार्य तत्र प्रयुक्ते द्वे क्रियापदे वदत

स्वास्थ्य–स्वच्छतयोर्दातः सर्वकिल्विषहारि हे ।
पिपासां हर मे नित्यं जलदेव ! नमोऽस्तु ते ॥

४. प्रदत्तस्य चित्रस्य नेपालिभाषायां वर्णनं श्रावयत



५. अधस्तनानि पदानि प्रयुज्य एकैकं वाक्यं कक्षायां श्रावयत

भो मित्र !, शिक्षिके !, आम्, न, किमर्थम्, किम्, स्वीकृतम्, कदा

६. वाक्यानि श्रुत्वा पाठाधारेण समीचीनम्, असमीचीनं वा कथयत

(क) सूर्यः अस्मभ्यं शीतलतां ददाति।

(ख) वायुः प्राणदः वर्तते।

(ग) जलं स्वच्छतायाः दाता अस्ति।

(घ) पृथ्वी गन्धवती न भवति।

(ङ) प्रकृतेः सुरक्षा मानवधर्मः विद्यते।

७. मित्रात् पाठस्य तृतीयं श्लोकं श्रुत्वा एकपदेन उत्तरं वदत

(क) का आश्रयं ददाति ?

(ख) "सिद्धिमृद्धिम्" इत्यत्र द्वितीयं पदं किम् ?

(ग) वसुधा कस्मै भुक्तिं ददाति ?

(घ) कस्मै नमः अस्तु ?

(ङ) "विश्वम्भरा" इति पदस्य पर्यायपदं किम् ?

८. प्रदत्तां प्रहेलिकां श्रुत्वा मित्रैः सह विमर्शेन समुचितम् उत्तरम् अन्विषत

प्रकाशः शीतलो यस्य यः कलाभिश्च वर्धते।

तापं हरति सर्वेषां चकोरस्य प्रियः स कः ?

| |
|---|
| उसको प्रकाश शीतल छ । ऊ कलाहरूले बढ्दछ । उसले तापलाई हरण गर्दछ । ऊ चकोर (च्याखुरा चरा) को प्रिय छ । ऊ को हो ? |

९. श्रवणपाठस्य श्रवणेन परस्परं मेलयित्वा अभ्यासपुस्तिकायां वाक्यानि लिखत

| | |
|---|---|
| अस्माकं मातृरूपा धरा | तदा मानवजीवनमपि सुरक्षितम्। |
| संसाधनानां संरक्षणम् | नैव कर्तव्यः। |
| यदा धरा सुरक्षिता | प्राकृतवस्तूनि वर्तन्ते। |
| सूर्यः, चन्द्रः, आकाशः अपि | प्रकृतिप्रदत्ता वर्तते। |
| प्राकृतवस्तूनां दुरुपयोगः | अस्माकं दायित्वम् अस्ति। |

## पठनम्

१. शिक्षकसाहाय्येन श्लोकं पठित्वा विमृशत

देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा।
तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति॥

(श्रीमद्भगवद्गीता २।१३)

सरलार्थः

देहधारिणः प्राणिनः शरीरे यथा बाल्यं यौवनं वार्धक्यं च भवन्ति तथैव अपरशरीरस्य प्राप्तिरपि जायते। तत्र धीरो जनो मोहितो न भवति।

देहधारण गरेको प्राणीको शरीरमा जसरी बालककाल, यौवनकाल र वृद्धावस्था हुन्छन् त्यसै गरी अर्को शरीरको प्राप्ति पनि हुन्छ। त्यसमा धीर मनुष्य मोहित हुँदैन।

२. पाठस्य आदौ प्रदत्तं प्रातर्वन्दनश्लोकं पठित्वा परस्परं मेलयत

| | |
|---|---|
| पृथ्वी | स्पर्शी |
| आपः | सशब्दम् |
| वायुः | सगन्धा |
| तेजः | सरसाः |
| नभः | ज्वलितम् |

३. अधस्तनान् वाक्यखण्डान् पठित्वा शिक्षकं श्रावयत

नमोऽस्तु ते, नमस्तुभ्यम्, ददासि मे, कारयाम्यहम्, नत्वाऽऽकाशम्, स्वास्थ्यस्वच्छतयोर्दातः।

४. अधस्तनम् अनुच्छेदं सकार–वकारबलाघातसहितं निरवच्छिन्नं पठत

वायुः शब्दवान् भवति। यदा वायुः सरति तदा मन्दं मन्दं शब्दं करोति। वायुः स्पर्शवान् च भवति। सः जनान्, अन्यानि वस्तूनि च स्पृशति। वायोः स्पर्शः आनन्दप्रदः भवति। वायुः पुष्पाणि स्पृष्ट्वा तेषां सुगन्धं सञ्चारयति। वायुः

अस्मभ्यं श्वासम् यच्छति । वायोः सरणेन वृक्षाणां पत्राणि चलन्ति । वायोः मन्दं मन्दं सरणेन, शब्देन, स्पर्शेन च अस्माकं सन्तोषः भवति । मनसि, शरीरे च आनन्दः सञ्जायते । पवनः वायोः अपरं नाम वर्तते । पवनः पर्यावरणं शीतलम्, स्वच्छं च कारयति । वायुः सृष्टिकारकेषु महाभूतेषु अन्यतमः विद्यते । शब्द–स्पर्शौ वायोः गुणौ वर्तेते ।

वायु शब्दयुक्त हुन्छ । जब वायु चल्दछ, बिस्तारै बिस्तारै शब्द निकाल्दछ । वायु स्पर्शले पनि युक्त हुन्छ । वायुले मानिस र अन्य वस्तुहरूलाई पनि स्पर्श गर्दछ । वायुको स्पर्शले आनन्द दिन्छ । वायुले फूललाई छोएर त्यसको सुगन्ध फैलाउँछ । वायुले हामीलाई अक्सिजन दिन्छ । वायु चल्दा रुखका पातहरू हल्लिन्छन् । मन्द वायु चल्दाको प्राकृतिक दृश्य, शब्द र स्पर्शले हामीलाई सन्तोष मिल्दछ । मन र शरीर दुवैमा आनन्दको सञ्चार हुन्छ । वायुको अर्को नाम पवन हो । पवनले वातावरणलाई शीतल र स्वच्छ बनाउँछ । वायु सृष्टिका कारक महाभूतमध्ये एक हो । शब्द निकाल्नु र स्पर्श गर्नु वायुका दुई गुण हुन् ।

५. अधस्तनं पद्यं मित्रेण सह सलयम् अनुवाचयत

महाभूतानि खं वायुरग्निरापः क्षितिस्तथा ।
शब्दः स्पर्शश्च रूपं च रसो गन्धश्च तद्गुणाः ॥

आकाश, वायु, अग्नि (तेज), पानी (जल) र पृथ्वी यी पाँच महाभूत हुन् । शब्द, स्पर्श, रूप, रस र गन्ध यी पाँच महाभूतहरूमा रहने गुणहरू हुन् । (यी गुणहरूमध्ये पृथ्वीमा सबै पाँच गुण हुन्छन् । जलमा गन्धबाहेक अन्य चार गुण हुन्छन् । अग्निमा गन्ध र रस बाहेक अन्य तीन गुण हुन्छन् । वायुमा शब्द र स्पर्श गरी दुई गुण हुन्छन् । आकाशमा शब्द गुण मात्र हुन्छ ।)

६. प्रदत्तम् अनुच्छेदं प्रथमं सस्वरं तदनु मौनं पठित्वा प्रश्नान् उत्तरयत

पर्यावरणं स्वयमेव दूषितं नैव भवति । अस्माकं क्रियाकलापैः इदं दूषितं भवति । वृक्षाः प्राणवायुं यच्छन्ति । ते मृत्तिकायाः, जलस्य च संरक्षणम् अपि कुर्वन्ति ।

वृक्षाणां कर्तनं प्रदूषणस्य कारणम् अस्ति। तेन प्रकृतेः सौन्दर्यम् अपि विनश्यति। जले, स्थले च यत्र तत्र अवकराणां क्षेपणेन अपि प्रदूषणं जायते। पर्यावरणस्य विकारेण विपत्तयः आयान्ति। विपत्तीनां निवारणाय प्रकृतेः संरक्षणम् आवश्यकं भवति।

(अ) एकपदेन उत्तरं लिखत

(क) के प्राणवायुं यच्छन्ति ?

(ख) वृक्षाणां कर्तनं कस्य कारणं भवति ?

(ग) कस्य विकारेण विपत्तयः आयान्ति ?

(घ) वृक्षाणां कर्तनेन कस्याः सौन्दर्यं विनश्यति ?

(आ) पूर्णवाक्येन उत्तरं लिखत

(क) पर्यावरणं कथं दूषितं भवति ?

(ख) वृक्षाणां कर्तनं कस्य कारणं भवति ?

(ग) वृक्षाः कस्य संरक्षणं कुर्वन्ति ?

(घ) विपत्तीनां निवारणाय किम् आवश्यकं भवति ?

वातावरण आफैँ दूषित हुँदैन। हाम्रा क्रियाकलापहरूले नै वातावरण दूषित हुन्छ। रुखहरूले अक्सिजन दिन्छन्। तिनले माटो र पानीको संरक्षण पनि गर्छन्। रुख काट्नु प्रदूषणको कारण हो। त्यसले प्राकृतिक सौन्दर्यलाई पनि नाश गर्छ। पानीमा र जमिनमा जथाभावी फोहोर फाल्नाले पनि प्रदूषण हुन्छ। वातावरण बिग्रनाले विपत्तिहरू आउँछन्। विपत्ति रोक्नका लागि प्रकृतिको संरक्षण आवश्यक छ।

७. पाठस्य अन्तिमस्य पद्यस्य अन्वयं सरलार्थं च पठित्वा कक्षायां श्रावयत।

८. शिक्षकस्य मित्रस्य वा साहाय्येन संवादशैल्या श्लोकान् पठित्वा अधस्नतकार्यकलापौ कुरुत

सूर्यस्य सप्त नामानि अपराणि द्रुतं वद।

रविर्भानुः सूरादित्यौ भास्करोऽर्को दिवाकरः ॥

पृथिव्याः काश्यपी क्षोणिः धरित्री धरणी धरा।
पवनस्य मरुद्वायुः तेजसो दीप्ति-भा-प्रभाः ॥
आकाशस्य नभो व्योम तरोः वृक्षो महीरुहः।
जलस्य वारि पानीयं साधु ! तुभ्यं नमो नमः ॥

(अ) पर्यायपदे परस्परं मेलयत

| "क" खण्डः | "ख" खण्डः |
|---|---|
| धरा | नभः |
| पवनः | रविः |
| आकाशः | पृथिवी |
| तरुः | पानीयम् |
| जलम् | प्रभा |
| सूर्यः | वायुः |
| तेजः | वृक्षः |

(आ) कोष्ठकात् समुचितं पदं विन्यस्य रिक्तस्थानं पूरयत

(क) तेजसः अपरं नाम ................ अस्ति। (दीप्तिः, क्षोणिः, तरुः)

(ख) ................ आकाशस्य पर्यायपदं वर्तते। (अर्कः, व्योम, आपः)

(ग) जलस्य ................ पर्यायपदं विद्यते। (वारि, दिवाकरः, भा)

(घ) वृक्षस्य पर्यायपदम् ................ अस्ति। (धरणी, आदित्यः, महीरुहः)

(ङ) पवनः ................ च पर्यायौ स्तः। (भानुः, मरुत्, पृथ्वी)

(च) ................ आदित्यः च पर्यायपदे वर्तेते। (धरा, नभः, सूरः)

प्रश्न– सूर्यका अन्य सात नाम (पर्याय) छिटो छिटो भन्नुहोस्।

उत्तर– रवि, भानु, सूर, आदित्य, भास्कर, अर्क, दिवाकर।

पृथिवीका पर्याय – काश्यपी, क्षोणिः, धरित्री, धरणी, धरा।

पवनका पर्याय – मरुत्, वायुः। तेज (प्रकाश) का पर्याय– दीप्ति, भा, प्रभा।

आकाशका पर्याय – नभः, व्योम। तरु (रुख) का पर्याय वृक्ष, महीरुह।

जलका पर्याय – वारि, पानीय। तपाईँले धेरै राम्रो भन्नुभयो। तपाईँलाई नमस्कार छ।

९. पाठं पठित्वा सम्बोधनसूचकानि पदानि एकत्र लिखत।

१०. पाठस्य मौनपठनं विधाय अज्ञातार्थानि पदानि रेखाङ्कितानि कुरुत।

## लेखनम्

१. पाठस्य तृतीयस्य श्लोकस्य पदच्छेदसहितम् अनुलेखनं कुरुत।

२. पुस्तकम् अवलम्ब्य शब्दानाम् अर्थं लिखत

पिपासा, नमः, हर, प्रतिजानामि, किल्विषम्, सर्वत्र, वसुधा

३. उदाहरणं दृष्ट्वा सारिण्याः पदैः वाक्यानि विरच्य अभ्यासपुस्तिकायां लिखत

| | | | | |
|---|---|---|---|---|
| हे इष्टदेव ! | अहम् | सदा | मातृभक्तः/मातृभक्ता | भवानि। |
| | | | पितृभक्तः/पितृभक्ता | |
| | | | आचार्यभक्तः/आचार्यभक्ता | |
| | | | राष्ट्रभक्तः/राष्ट्रभक्ता | |
| | | | देवभक्तः/देवभक्ता | |
| | | | सत्यवादी/सत्यवादिनी | |
| | | | सदाचारी/सदाचारिणी | |

**यथा–** हे इष्टदेव ! अहं सदा मातृभक्तः भवानि।

४. प्रातर्वन्दनश्लोकात् उत्तराणि लिखत

(क) पृथ्वी कीदृशी विद्यते ?

(ख) आपः कीदृश्यः भवन्ति ?

(ग) वायुः कीदृशः वर्तते ?

(घ) नभः कीदृशमस्ति ?

(ङ) तेजः कीदृशं वर्तते ?

५. स्वसमुदाये स्थितानां सप्तानां प्राकृतवस्तूनां नामानि लिखित्वा कक्षायां श्रावयत।

६. अधस्तने पद्ये कस्य प्रार्थना विहिता विद्यते ? मित्राणां शिक्षकस्य वा सहयोगेन श्लोकात् चत्वारि वाक्यानि रचयत

धत्ते भरं कुसुमपत्रफलावलीनां
घर्मव्यथां वहति शीतभवां रुजं च।
यो देहमर्पयति चान्यसुखस्य हेतोः
तस्मै वदान्यगुरवे तरवे नमोऽस्तु ॥

| |
|---|
| जसले फूल, पात, फल आदिको भार बोक्दछ, घामको व्यथा र चिसोले निम्त्याएको रोग वहन गर्दछ, अरूको सुखका निम्ति आफ्नो शरीर अर्पण गर्दछ, त्यस्ता महान् दानी गुरु (परोपकारको पाठ सिकाउने) रुखलाई नमस्कार छ। |

७. पाठस्य प्रथमस्य श्लोकस्य अन्वयं प्रदर्शयत।

८. पाठाधारेण प्रश्नानाम् उत्तरं लिखत

(क) किल्विषहारि किम् ?

(ख) कः प्राणं ददाति ?

(ग) पृथ्वी किं किं ददाति ?

(घ) अहं कं कं नत्वा प्रतिजानामि ?

(ङ) ऊर्जायाः दाता कः ?

(च) किं पिपासां हरतु ?

(छ) अहं प्राकृतवस्तूनि कीदृशानि कारयामि ?

(ज) पाठे "ते" "मे" इति शब्दौ कस्मिन् कस्मिन् अर्थे प्रयुक्तौ स्तः ?

(झ) पञ्चमहाभूतानां नामानि लिखत।

९. पाठस्य द्वितीयस्य श्लोकस्य सरलार्थं लिखत।

१०. शिक्षकस्य साहाय्येन अधस्तनं पद्यं पठित्वा उत्तरं लिखत

एहि सूर्य ! सहस्रांशो तोजोराशे जगत्पते।
अनुकम्पय मां भक्त्या गृहाणार्घ्यं दिवाकर॥

(क) श्लोकस्थानि त्रीणि क्रियापदानि कानि ?

(ख) श्लोके पञ्च सम्बोधनसूचकानि पदानि सन्ति। तानि कानि ?

(ग) "गृहाणार्घ्यम्" इत्यत्र द्वे पदे स्तः। ते के ?

(घ) तेजोराशिः कः ?

(ङ) श्लोकस्य आधारेण त्रीणि वाक्यानि रचयत।

| |
|---|
| हे हजार किरण भएका सूर्य ! हे तेज (प्रकाश) को समूहरूपी सूर्य ! हे संसारका मालिक सूर्य ! हे दिन गराउने सूर्य ! तपाईँ आउनुहोस्। मलाई दया गर्नुहोस्। मैले भक्तिपूर्वक चढाएको अर्घ्य ग्रहण गर्नुहोस्। |

## व्याकरणानुशीलनम्

१. प्रदत्तां शब्दरूपावलिं पठित्वा अभ्यासपुस्तिकायाम् अनुलिखत

देव–शब्दस्य रूपाणि–

| एकवचनम् | द्विवचनम् | बहुवचनम् | |
|---|---|---|---|
| देवः | देवौ | देवाः | – प्रथमा |
| देवम् | देवौ | देवान् | – द्वितीया |

| | | | |
|---|---|---|---|
| देवेन | देवाभ्याम् | देवैः | – तृतीया |
| देवाय | देवाभ्याम् | देवेभ्यः | – चतुर्थी |
| देवात्–द् | देवाभ्याम् | देवेभ्यः | – पञ्चमी |
| देवस्य | देवयोः | देवानाम् | – षष्ठी |
| देवे | देवयोः | देवेषु | – सप्तमी |
| हे देव ! | हे देवौ ! | हे देवाः ! | – सम्बोधनम् |

२. अधस्तनीं सारिणीं पठित्वा सम्बोधनस्य प्रयोगस्य अभ्यासं कुरुत

| | | | | |
|---|---|---|---|---|
| देवः | हे देव ! | हे देवौ ! | हे देवाः ! | अकारान्तपुँल्लिङ्गे |
| धरा | हे धरे ! | हे धरे ! | हे धराः ! | आकारान्तस्त्रीलिङ्गे |
| हरिः | हे हरे ! | हे हरी ! | हे हरयः ! | इकारान्तपुँल्लिङ्गे |
| देवी | हे पृथिवि ! | हे पृथिव्यौ ! | हे पृथिव्यः ! | ईकारान्तस्त्रीलिङ्गे |
| गुरुः | हे गुरो ! | हे गुरू ! | हे गुरवः ! | उकारान्तपुँल्लिङ्गे |
| वधूः | हे वधु ! | हे वध्वौ ! | हे वध्वः ! | ऊकारान्तस्त्रीलिङ्गे |

३. (अ) उदाहरणानुसारेण रिक्तस्थाने सम्बोधनस्य एकवचनं स्थापयत।

(क) सूर्यः प्रकाशं ददाति। हे सूर्य ते नमः।

(ख) जनकः मयि स्निह्यति। .......... ते नमः।

(ग) शिक्षकः मां पाठयति। ........... ते नमः।

(घ) देवः अस्मान् रक्षति। ........ तुभ्यं नमः।

(ङ) धरा अस्मभ्यम् अन्नं ददाति। ....... तुभ्यं नमः।

(आ) उदाहरणानुसारेण रिक्तस्थानं पूरयत

(क) हे शिक्षक ! अत्र आगच्छ। (क) **हे शिक्षकाः !** अत्र आगच्छत।

(ख) हे गायक ! गीतं गाय। (ख) ........ गायत।

| | |
|---|---|
| (ग) हे बालिके ! पाठं पठ। | (ग) .......... पाठं पठत। |
| (घ) ........ काव्यं लिख। | (घ) हे कवयः ! काव्यं लिखत। |
| (ङ) हे भगिनि ! जलं पिब। | (ङ) .......... ! जलं पिबत। |
| (च) हे साधो ! उपदेशं कुरु। | (च) ....... उपदेशं कुरुत। |

३. उदाहरणम् अनुसृत्य पाठस्य सहयोगेन पदानि विच्छेदयत

यथा– सर्वभूतानाम् = सर्व–भूतानाम्

कारयाम्यहम् = कारयामि+अहम्

स्वास्थ्यस्वच्छतयोर्दाता = स्वास्थ्य+स्वच्छतयोः+दाता

सरसास्तथापः = सरसाः+तथा+आपः

नमस्तुभ्यम् = ..................+...................................

नमोऽस्तु = ..................+...................................

सर्वकिल्विषहारि= ................+................+..................

नत्वाऽऽकाशम् = ..................+...................................

ऊर्जाप्रकाशदायक = ................+................+..................

चाश्रयम् = ..................+...................................

यद्दृढम् = ..................+...................................

सर्वप्राकृतवस्तूनि = ................+................+..................

४. शिक्षक–शब्दस्य सर्वाणि रूपाणि विलिख्य शिक्षकं दर्शयत।

५. उदाहरणम् अनुसृत्य वाक्यानि परिवर्तयत

यथा– धरा गन्धवती अस्ति।

– गन्धवत्यै धरायै नमः।

(क) धरा शब्दवती अस्ति।  ................................।

(ख) धरा रसवती अस्ति।  ................................।

(ग) धरा स्पर्शवती अस्ति।  ................................।

(घ) धरा रूपवती अस्ति।  ................................।

## रचनात्मकः अभ्यासः

१. प्रदत्तपदानां समुचितेन क्रमविन्यासेन स्तुतिपद्यं कारयत

नेपालमातरम्, परिरक्षिकाम्, वन्दे, जनकम्, वन्दे, जननीम्, कर्मदातारम्, जन्मदाम्, सर्वतः।

२. मञ्जूषातः समुचितपदानां चयनेन संवादखण्डान् प्रपूर्य पुनर्लेखनं कुरुत

| |
|---|
| हे शिक्षिके, आम्, न पितः, परन्तु यथासमयं जलं पातुं मा विस्मर, कः विशेषः मित्र, त्वं शीघ्रम् अत्र आगच्छ |

(क) **छात्रः** – "भो गुरो ! अहं अन्तः आगन्तुं शक्नोमि ?"

**गुरुः** – "..............। आगच्छ वत्स !"

(ख) **कविता** – "................. ! मां संस्कृतं पाठयसि ?"

**शिक्षिका** – "अवश्यं कविते ! अद्यैव आरम्भं करवाव।"

(ग) **एकं मित्रम्** – "अयि सखे ! ................................।"

**अपरं मित्रम्** – "................... ? किमर्थम् अहं शीघ्रम् आहूतः ?"

(घ) **पिता** – "पुत्रि ! सायं मया सह भ्रमणाय गच्छसि ?"

**पुत्री** – "............... ! अद्य बहूनि गृहकार्याणि सन्ति। श्वः अवश्यमेव गन्तास्मि।"

(ङ) **पुत्रः** – "मातः ! इदानीं मम पिपासा नास्ति। जलं मास्तु।"

**माता** – "अस्तु पुत्र ! .............................................।"

३. प्रदत्तपदानां प्रयोगं कृत्वा चित्रं च दृष्ट्वा चत्वारि प्रार्थनावाक्यानि लिखत

गुरो !, मनोगतस्य अन्धकारस्य हर्ता, ज्ञानस्य बुद्धेश्च दाता, सन्मार्गस्य दर्शकः, नमस्कारः, त्वम्, मम, तुभ्यम्, असि, अस्तु, हे



४. केषाञ्चन त्रयाणां प्राकृतवस्तूनां रङ्गभरितानि चित्राणि निर्माय कक्षाप्रकोष्ठस्य भित्तौ स्थापयत।

**श्रवणपाठः**

पृथ्वी अस्माकं मातृस्वरूपा वर्तते। सा अस्मभ्यं सर्वं ददाति परन्तु अस्मत् किमपि न गृह्णाति। धरा एव अस्मभ्यम् आश्रयम् अन्नं च यच्छति। नद्यः धरातले वहन्ति। वृक्षाः धरायामेव विकसन्ति। पर्वताः, वनानि, तडागाः च धरातले एव भवन्ति। इयं धरा प्रकृतिप्रदत्ता वर्तते। अस्याः सर्वाणि वस्तूनि प्राकृतिकवस्तूनि सन्ति। सूर्यः, चन्द्रः, आकाशः, वायुः, जलम् अपि प्राकृतिकवस्तूनि वर्तन्ते। इमानि वस्तूनि अस्मान् पोषयन्ति। अतः एतेषां संसाधनानां संरक्षणम् अस्माकं दायित्वम् अस्ति। अतः वयं स्वार्थवशात् प्राकृतवस्तूनां दुरूपयोगं नैव करवाम। धरायाः रक्षणं करवाम। यदा धरा सुरक्षिता भवति तदा मानवजीवनमपि सुरक्षितं भवति।

द्वितीयः पाठः

# आत्मविश्वासः

**पाठप्रवेशः** **ग्रामप्रधानस्य छलम्**



पुरा एकः विचित्र ग्रामः आसीत् । एकदा रात्रौ गजानां समूहः ग्राममार्गे अचलत् । ग्रामीणाः तदा सुप्ताः आसन् । कश्चिद् अपि जागृतः न आसीत् । ते गजसमूहं न अपश्यन् । ग्रामस्य निकटे गजसमूहः न वसति स्म । ग्रामीणाः पूर्वं गजं दृष्टवन्तः न आसन् । अतः गजः कीदृशः पशुः अस्ति इति अपि ते न जानन्ति स्म ।

ग्रामीणाः अपरस्मिन् दिने मार्गेषु क्षेत्रेषु च भ्रमणाय अगच्छन् । तत्र ते विशालानि पदचिह्नानि अपश्यन् । विस्मिताः सन्तः ते अचिन्तयन्, "ह्यः किमपि न आसीत्, अद्य सहसा किं जातम् ?" इति । कः अपि तस्मिन् विषये बोद्धुं बोधयितुं च समर्थः न अभवत् । तस्मिन् ग्रामे एकः ग्रामप्रधानः आसीत् । स आत्मानं सर्वज्ञं मन्यते स्म । ग्रामीणाः शिक्षिताः न आसन् । प्रधानः तेषां समक्षम् यत्किमपि कथयति स्म, परं सरलाः ते तं विश्वसन्ति स्म । पदचिह्नानां रहस्यं ज्ञातुं ते प्रधानस्य गृहम् अगच्छन् ।

ग्रामीणाः प्रधानस्य समक्षे सर्वं वृत्तान्तम् अकथयन् । विशालानि पदचिह्नानि अपि अदर्शयन् । ते अपृच्छन्, "कथम् इत्थम् अभवत् ? केषां पदचिह्नानि सन्ति

एतानि ?" इति । प्रधानः ततः पूर्वं तादृशानि पदचिह्नानि दृष्टवान् न आसीत् । स स्वयम् आश्चर्यचकितः आसीत् । परन्तु स "अहं न जानामि" इति कथयितुं न अशक्नोत् । स अचिन्तयत्, "अस्मिन् विषये न जानामि इति कथयामि चेत् एते मम सम्मानं न कुर्वन्ति । अतः किञ्चित् तु मया कथनीयम् एव" इति । प्रधानः किञ्चित् विचार्य अवदत्, "यद् अहं जानामि तत् अन्यः कश्चिद् अपि न जानाति । मृगाः रात्रौ पादेषु चक्राणि बद्ध्वा इतस्ततः अभ्रमन् । अत एव एतानि विशालानि पदचिह्नानि निर्मितानि" इति । ग्रामीणाः अपि गजविषये अज्ञाः आसन् । अतः तस्य कथनं विश्वस्य ते प्रत्यागताः । जयजयकारं च अकुर्वन् ।

पहिले एउटा अचम्मको गाउँ थियो । एकपटक त्यस गाउँमा रातमा हात्तीहरूको हुल हिँड्यो । गाउँलेहरू सुतेका थिए । कोही पनि जागा थिएन । तिनीहरूले हात्तीको हुल देखेनन् । गाउँनजिक हात्ती हुँदैनथे । उनीहरू हात्ती कस्तो पशु हो जान्दैनथे ।

भोलिपल्ट गाउँलेहरू बाटो र खेतमा घुम्न गए । त्यहाँ ठुला पाइला देखे । अचम्म मानेर सोचे, "हिजो केही थिएन । आज अकस्मात् के भयो ?" कसैले पनि त्यसबारे बुझ्न र बुझाउन सकेन । त्यस गाउँमा एउटा मुखिया थियो । ऊ आफूलाई सर्वज्ञ ठान्दथ्यो । गाउँलेहरू पढेलेखेका थिएनन् । मुखिया तिनीहरूको अगाडि जे पनि भन्दथ्यो । सोझा उनीहरू मुखियालाई विश्वास गर्दथे । पाइलाको रहस्य जान्न तिनीहरू मुखियाको घर गए ।

गाउँलेहरूले मुखियालाई सबै बताए । पाइला पनि देखाए । उनीहरूले सोधे, "कसरी यस्तो भयो ? कसका पाइला हुन् यी ?" मुखियाले त्यसभन्दा अगाडि त्यस्ता पाइला देखेको थिएन । ऊ आफैँ चकित थियो । तर म जान्दिनँ भन्न सकेन । उसले सोच्यो, "मैले यसबारे जान्दिनँ भनेँ भने यिनीहरूले मेरो सम्मान गर्दैनन् । त्यसैले मैले केही भन्नैपर्छ ।" मुखियाले केही सोचेर भन्यो, "जे म जान्दछु त्यो कसैले पनि जान्दैन । मृगहरू रातमा खुट्टामा चक्का बाँधेर यताउता घुमे । त्यसैले यी ठुला पाइला बनेका हुन् ।" गाउँलेहरूले हात्तीबारे जानेका थिएनन् । उसको कुरा पत्याएर फर्किए । उसको जयजयकार पनि गरे ।

## मूलपाठः आत्मविश्वासः



शिवपुरीपर्वतस्य अङ्के एकः सुन्दरः ग्रामः आसीत्। ग्रामस्य उत्तरदिशि शिवमन्दिरम् आसीत्। तत्र एकः साधुः वसति स्म। स मन्दिरे पूजादिकं करोति स्म। दिने भिक्षार्थं ग्रामं भ्रमति स्म। अधिकं भिक्षान्नं सङ्कलयति स्म। स्वस्य भोजनाय भाण्डे किञ्चित् स्थापयति स्म। शेषं सर्वं दीनेभ्यः ददाति स्म। तत्र एकः मूषकः आसीत्। मूषकः प्रतिदिनं भाण्डात् किञ्चिद् अन्नं चोरयति स्म। एतेन साधुः दुःखितः आसीत्। साधुः मूषकाद् अन्नं रक्षितुम् इच्छति स्म। स अनेकान् उपायान् अचिन्तयत्। भाण्डम् उपरि अस्थापयत्। तत्रापि मूषकः प्राप्नोत्। ततः दण्डेन मूषकं प्रहर्तुम् आरभत। परन्तु मूषकः मार्गम् अन्विष्य अन्नं चोरयति स्म।

एकदा एकः भिक्षुकः मन्दिरं प्राप्नोत्। साधुः मूषकं दण्डेन प्रहर्तुम् उद्यतः आसीत्। अतः साधुः भिक्षुकस्य स्वागतार्थं न आगच्छत्। भिक्षुकः सक्रोधम् अकथयत्, "अहम् इतः परम् अत्र न आगमिष्यामि यतः भवतः कृते अन्यत् कार्यं महत्त्वपूर्णं विद्यते। मया सह मेलनस्य समयः नास्ति" इति। एतत् श्रुत्वा साधुः विनम्रः सन् भिक्षुकं प्राणमत्। सर्वं दुःखस्य वृत्तान्तम् अकथयत्। मूषकः विडालाद् वानरात् च शक्तिमान् अस्ति इति न्यवेदयत्।

साधोः वार्तां श्रुत्वा भिक्षुकः अवदत्, "मूषकस्य आत्मविश्वासस्य किमपि कारणं स्यात्। आत्मविश्वासेन शक्तिः प्राप्यते। तेन एव एष उच्चस्थानं गन्तुं समर्थः अभवत्। मार्गम् अन्वेष्टुं च क्षमः अभवत्। अतः पूर्वं कारणम् अन्वेषणीयम्। अवश्यम्, एतस्य पार्श्वे अन्नस्य भाण्डागारं वर्तते" इति । तौ मूषकस्य बिलस्य अन्वेषणाय सहमतौ अभवताम्।

अपरस्मिन् दिने तौ मूषकस्य प्रतीक्षाम् अकुरुताम् । मूषकः आगच्छत् । ततः तम् अनुसृत्य तस्य बिलम् अगच्छताम्। तौ खनित्रेण विलम् अखनताम्। भिक्षुकस्य चिन्तनं सत्यं जातम्। तत्र अन्नस्य विशालं भाण्डागारम् आसीत्। तद् दृष्ट्वा साधुः विस्मितः अभवत्। तत्रत्यं सर्वम् अन्नं मन्दिरे आनयत्। मूषकः दुःखी चिन्तामग्नः च अभवत्। महता परिश्रमेण स अन्नस्य सङ्कलनं कृतवान् आसीत्। "पुनः चोरयिष्यामि" इति स अचिन्तयत्।

रात्रिः अभवत्। मूषकः चौर्यार्थम् अगच्छत्। भाण्डम् उपरि स्थापितम् आसीत्। स तत् प्राप्तुम् न अशक्नोत्। अन्नस्य अन्वेषणक्रमे स भूम्याम् अपतत्। तस्मिन् एव समये साधुः दण्डेन तं प्राहरत्। भयत्रस्तः स ततः पलायितवान्। यदा तस्य अन्नस्य भाण्डागारम् आसीत् तदा तस्मिन् आत्मविश्वासः आसीत्। आत्मविश्वासः शक्तिम् अजनयत्। तेन कारणेन स अन्नं चोरयितुं क्षमः अभवत्। यदा आत्मविश्वासः गतः तदा स दैनन्दिनं कार्यं कर्तुम् एव न अशक्नोत्। पश्चात् स तत्र कदापि न आगच्छत्।

शिवपुरी पहाडको काखमा सुन्दर गाउँ थियो । गाउँको उत्तरतर्फ शिवमन्दिर थियो। त्यहाँ एक जना साधु बस्दथे। उनी मन्दिरको पूजा आदि गर्दथे। दिनमा भिक्षाका लागि गाउँ घुम्थे। धेरै अन्न बटुल्थे। आफ्नो भोजनका लागि भाँडामा केही राख्थे। बाँकी सबै गरिबहरूलाई दिन्थे। त्यहाँ एउटा मुसो थियो। मुसो हरेक दिन भाँडाबाट केही अन्न चोर्थ्यो। यसले गर्दा साधु दुःखी थिए। साधु मुसाबाट अन्न जोगाउन चाहन्थे। उनले धेरै उपाय सोचे। भाँडामाथि राखे। त्यो पनि मुसाले भेट्यो। त्यसपछि लट्ठीले मुसालाई प्रहार गर्न थाले। तर मुसा बाटो खोजेर अन्न चोर्न गर्दथ्यो।

एकपटक कुनै अर्का भिक्षु मन्दिर आइपुगे। त्यतिखेर साधु मुसालाई लट्ठीले प्रहार गर्न तयार थिए। त्यसैले साधु भिक्षुको स्वागतका लागि आएनन्। भिक्षुले रिसाएर भने, “म अबदेखि यहाँ आउने छैन किनकि तपाईँका लागि अरू काम नै महत्त्वपूर्ण छ। मसँग भेट्ने समय छैन।” यो सुनेर साधुले विनम्र भई प्रणाम गरे। सबै दुःखको कुरा सुनाए। मुसा बिरालो र बाँदरभन्दा पनि शक्तिशाली छ भनेर बताए।

साधुको कुरा सुनेर भिक्षुले भने, “मुसाको आत्मविश्वासको केही कारण हुनुपर्छ। आत्मविश्वासबाट बल पाइन्छ। त्यसले गर्दा यो माथि पुग्न पनि समर्थ भयो। बाटो खोज्न पनि सक्षम भयो। त्यसैले पहिला कारण खोज्नुपर्छ। अवश्य पनि यससँग अन्नको भण्डार छ।” त्यसपछि ती दुई जना मुसाको दुलो पत्ता लगाउन सहमत भए।

भोलिपल्ट बिहान ती दुई उठेर मुसालाई पर्खे। मुसो आयो। त्यसपछि मुसालाई पछ्याएर त्यसको दुलोमा पुगे। कोदालोले खने। भिक्षुको कुरा साँचो साबित भयो। त्यहाँ ठुलो भण्डार थियो। त्यो देखेर साधु चकित भए। त्यहाँको सबै अन्न मन्दिरमा ल्याए। मुसो दुःखी भयो। ऊ चिन्तित भयो। ठुलो परिश्रमले उसले अन्न बटुलेको थियो। “फेरि चोर्ने छु” उसले सोच्यो।

रात पर्‍यो। मुसो चोर्न आयो। भाँडो माथि राखिएको थियो। उसले त्यो भेट्न सकेन। भुइँमा पछारियो। त्यही बेला साधुले लठ्ठीले प्रहार गरे। डराएको मुसो त्यहाँबाट भाग्यो। जतिखेर उसको भण्डार थियो त्यतिखेर आत्मविश्वास थियो। आत्मविश्वासले शक्ति पैदा गर्‍यो। त्यसकारण ऊ अन्न चोर्न सक्षम भयो। जतिखेर आत्मविश्वास गयो त्यतिखेर उसले दैनिक काम गर्न पनि सकेन। पछि ऊ त्यहाँ कहिल्यै आएन।

## शब्दार्थः

| मूलशब्दः | संस्कृते पर्यायः | नेपाल्याम् अर्थः | आङ्गलभाषायाम् अर्थः |
|---|---|---|---|
| अङ्क | कक्षः | काख | Lap |
| साधुः | सज्जनः | असल मानिस | Right eous man, gentleman |
| भाण्डम् | पात्रम् | भाँडा | Pot |
| मूषकः | आखुः | मुसो | Rat |
| उपायः | युक्तिः | उपाय | Idea |
| आरभत | प्रारब्धवान् | सुरु गऱ्यो | Started |
| अन्विष्य | अन्वेषणं कृत्वा | खोजेर | By searching |
| भिक्षुकः | संन्यासी | भिक्षु | Monk |
| उद्यतः | सन्नद्धः | तयार | Ready |
| अतः | अस्मात् कारणात् | त्यसैले | Therfore |
| सक्रोधम् | सकोपम् | रिससहित | With anger |
| महत्त्वपूर्णम् | महिमयुक्तम् | विशिष्ट महत्त्व भएको | Important |
| विनम्रः | विनीतः | नम्र | Humble |
| प्राणमत् | नतवान् | प्रणाम गऱ्यो | Greeted |
| वृत्तान्तम् | विवरणम् | कुनै विषयको विस्तृत बयान | Description |
| न्यवेदयत् | निवेदनम् अकरोत् | निवेदन गऱ्यो, बतायो | Invocated, Requested |

| | | | |
|---|---|---|---|
| श्रुत्वा | आकर्ण्य | सुनेर | By hearing |
| आत्मविश्वासः | स्वस्य सामर्थ्ये दृढनिश्चयः | आफ्नै भरोसामा रहने काम | Self-confidence |
| समर्थः | सक्षमः | शक्ति वा क्षमता भएको | Capable |
| भाण्डागारः | कोशः | ढुकुटी | Store |
| अनुसृत्य | अनुसरणं कृत्वा | पछ्याएर | By following |
| बिलम् | छिद्रम् | दुलो | Hole |
| खनित्रम् | कुद्दालः | कोदालो | Spade |
| चिन्तामग्नः | चिन्तितः | चिन्तामा डुबेको | Worried |
| भयत्रस्तः | भीतः | डराएको | Scared, ofraid |
| पलायितवान् | पलायनम् अकरोत् | भाग्यो | Ran away |
| दैनन्दिनम् | दैनिकम् | दैनिक | Daily |

## अभ्यासः

### श्रवणं भाषणं च

१. शिक्षकात् श्रुत्वा उच्चारयत

पदचिह्नानि, आश्चर्यचकितः, सङ्कलयति, प्राणमत्, शक्तिमान्, अन्वेषणीयम्, भाण्डागारः, दैनन्दिनम् ।

२. शिक्षकस्य सहयोगेन संयुक्ताक्षरं विभज्य कथयत

यथा–

ग्रामः = ग्+र्+आमः

ह्यः = ह्+य्+अः

सर्वज्ञः, प्रधानः, भिक्षुकः, उद्यतः, सक्रोधम्, अत्र, श्रुत्वा, वृत्तान्तः, परिश्रमः, तत्र, सङ्कलनम्।

३. कथायाः अनुच्छेदं क्रमेण सस्वरं वाचयत।

४. एकपदेन उत्तरं वदत

(क) ग्रामस्य कस्यां दिशि शिवमन्दिरम् आसीत् ?

(ख) साधुः शेषम् अन्नं केभ्यः ददाति स्म ?

(ग) कः सक्रोधम् अवदत् ?

(घ) साधू केन अखनताम् ?

(ङ) मूषकः कुत्र वसति स्म ?

(च) कः पलायितवान् ?

५. उचितवाक्ये “आम्”, अनुचितवाक्ये “न” वा वदत

(क) मध्यदिवसे गजसमूहः आगतः।

(ख) ग्रामीणाः गजम् अपश्यन्।

(ग) ग्रामीणाः वृत्तान्तम् अकथयन्।

(घ) ग्रामप्रधानः गजस्य विषये न जानाति स्म।

(ङ) ग्रामप्रधानः सत्यम् अवदत्।

(च) ग्रामीणाः ग्रामप्रधानस्य जयजयकारम् अकुर्वन्।

६. अनुच्छेदं श्रुत्वा उत्तरं वदत

ग्रामीणाः प्रधानं सर्वं वृत्तान्तम् अकथयन्। विशालानि पदचिह्नानि अपि अदर्शयन्। ते अपृच्छन्, “कथम् इत्थम् अभवत् ? केषां पदचिह्नानि सन्ति एतानि ?” इति। प्रधानः ततः पूर्वं तादृशानि पदचिह्नानि दृष्टवान् न आसीत्। स स्वयम् आश्चर्यचकितः आसीत्। परन्तु सः “अहं न जानामि” इति कथयितुं न अशक्नोत्। सः अचिन्तयत्, “अस्मिन् विषये न जानामि इति कथयामि चेद् एते

मम सम्मानं न कुर्वन्ति । अतः किञ्चित् तु मया कथनीयम् एव" इति । प्रधानः किञ्चित् विचार्य अवदत्, "यद् अहं जानामि तत् कश्चित् अपि न जानाति। मृगाः रात्रौ पादेषु चक्राणि बद्ध्वा इतस्ततः अभ्रमन् । अतः एव एतानि विशालानि पदचिह्नानि निर्मितानि" इति । ग्रामीणाः अपि गजविषये अज्ञाः आसन् । अतः तस्य कथनं विश्वस्य प्रत्यागताः । जयजयकारं च अकुर्वन् ।

(क) अनुच्छेद प्रयुक्तः "पश्चात्" इत्यस्य विपरीतार्थवाचकः शब्दः कः ?

(ख) "अभवत्" इति क्रियापदं कस्मिन् काले वर्तते ?

(ग) पदचिह्नानि केषाम् आसन् ?

(घ) ग्रामप्रधानः किम् अवदत् ?

(ङ) जयजयकारः कदा क्रियते ?

(च) "केषां पदचिह्नानि सन्ति ?" अस्मिन् वाक्ये सर्वनामपदं किम् ?

## ७. अधस्तनं गद्यांशं श्रुत्वा सारांशं कथयत

विदुरः पाण्डवानां कौरवानां च पितृव्यः आसीत् । स नीतिज्ञः आसीत् । स हस्तिनापुरराज्यस्य मन्त्री च अभवत्। स स्वस्य एव अग्रजं धृतराष्ट्रम् उपादिशत्। तस्य उपदेशः "विदुरनीतिः" इति नाम्ना परिचितः अस्ति। तस्मिन् विदुरः धृतराष्ट्रं बहून् विषयान् अवर्णयत्। तत्र स नीतिवचनानि अकथयत्। धर्मोपदेशं हितोपदेशं च अकरोत्। सः अन्यायं न सहते स्म। भ्रातृजान् सदाचारं शिक्षयति स्म। द्यूते छलेन पाण्डवानां पराजयः अभवत् । ते वनवासाय गताः । ततः कौरवानाम् अत्याचारः वर्धमानः आसीत् । तस्य उपदेशस्य पालनं कौरवाः न अकुर्वन् । तत्पश्चात् स राज्यसुखं त्यक्त्वा वनम् अगच्छत् । स न्यायमार्गम् अनुसृत्य मन्त्रिपदम् अपि अत्यजत् । जनाः विदुरम् अधुना अपि महान्तं नीतिज्ञं मानयन्ति । तस्य उपदेशं सज्जनाः परिपालयन्ति ।

विदुर पाण्डव र कौरवका काका थिए। उनी नीतिज्ञ थिए। उनी हस्तिनापुर राज्यका मन्त्री पनि भए। उनले आफ्नै दाजु धृतराष्ट्रलाई उपदेश गरे। तिनको उपदेश "विदुरनीति" यो नामले चिनिएको छ। त्यसमा विदुरले धेरै विषयको

वर्णन गरे। त्यहाँ उनले नीतिका वचनहरू भने। धर्मका र हितका उपदेश गरे। उनी अन्याय सहँदैनथे। भतिजाहरूलाई सदाचार सिकाउँथे। जुवामा छलले पाण्डवको हार भयो। उनीहरू वनवासका लागि गए। त्यहाँबाट कौरवको अत्याचार बढ्दै गयो। उनको उपदेशको पालना कौरवले गरेनन्। त्यसपछि उनी राज्यको सुख त्यागेर वन गए। उनले न्यायको बाटामा हिँडेर मन्त्रीको पद पनि त्यागे। मानिसहरू विदुरलाई अहिले पनि महान् नीतिज्ञ मान्दछन्। उनको उपदेशको सज्जनहरू पालना गर्दछन्।

८. शिक्षकाद् वाक्यं श्रुत्वा एकवचनम्, द्विवचनम्, बहुवचनं वा वदत

(क) युवकः गच्छति।
(ख) छात्रौ पठतः।
(ग) बालकाः लिखन्ति।
(घ) अग्रजा चलति।
(ङ) छात्रे नमतः।
(च) महिलाः वदन्ति।
(छ) मित्रं भ्रमति।
(ज) पत्रे पततः।
(झ) पुष्पाणि विकसन्ति।

९. शिक्षकात् पाठस्थकथायाः सारांशं श्रुत्वा स्वमातृभाषायां कथयत।

१०. श्रवणपाठं श्रुत्वा प्रश्नोत्तराणि लिखत

(क) कः कैः सह प्रेम करोति ?
(ख) मित्रेषु केषां सद्भावः भवति ?
(ग) कस्याम् अवस्थायां मित्रं सहयोगं करोति ?
(घ) मित्रं किं किं करोति ? पञ्च कार्याणि लिखत।
(ङ) किं मित्रं स्वयम् एव वस्तूनाम् उपभोगं करोति ? सत्यमेतत् ?
(च) कः दुःसाध्यान् विषयान् अपि साधयति ?
(छ) कः सर्वैः सह मित्रतां करोति ?
(ज) किं कार्यं विनाशयति ?
(झ) वैरमैत्र्योः किम् उत्तमम् ?

## पठनम्

१. पाठं सस्वरं वाचयत ।

२. शिक्षकसाहाय्येन श्लोकं पठित्वा विमृशत

उद्धरेद् आत्मनात्मानं नात्मानम् अवसादयेत् ।
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ॥

२. गद्यखण्डं पठित्वा शीर्षकं निर्धारयत

सीता नेपालस्य पुत्री अस्ति । सा जनकपुरे अजायत । जनकस्य पुत्री जानकी जनकपुरस्य गौरवम् अवर्धयत् । तस्याः अपरं नाम वैदेही अपि अस्ति । तस्याः विवाह अयोध्यायाः राजकुमारेण रामेण सह अभवत् । कालानन्तरं पितुः आज्ञया रामः वनवासार्थं सन्नद्धः अभवत् । तदा सीता रामेण सह एव वनम् अगच्छत् । पत्नी सहधर्मिणी सहचारिणी च अस्ति । पतिः अपि सहधर्मी सहचारी च भवति । पतिः पत्नी च जीवने सहयात्रां कुरुतः । अतः सा वनं गत्वा राज्यवैभवम् अत्यजत् । वने छलेन रावणः ताम् अपाहरत् परं सा स्वमर्यादां सदा परिपालितवती । सा नेपालस्य राष्ट्रियविभूतिः अस्ति । तस्याः विचारः अनुकरणीयः वर्तते ।

सीता नेपालकी छोरी हुन् । उनी जनकपुरमा जन्मिइन् । जनककी छोरी जानकीले जनकपुरको गौरव बढाइन् । तिनको अर्को नाम वैदेही पनि हो । तिनको विवाह अयोध्याका राजकुमार रामसँग भयो । केही समयपछि बुबाको आज्ञाले राम वनवासका लागि तयार भए । त्यतिखेर सीता रामसँग नै वन गइन् । पत्नी एउटै धर्म वा सिद्धान्तको अनुसरण गर्ने र सँगै हिँड्ने गर्छिन् । पति पनि समान धर्म वा सिद्धान्तको अनुसरण गर्ने र सँगै हिँड्ने हुन्छन् । पति र पत्नी जीवनमा सँगसँगै यात्रा गर्दछन् । त्यसैले उनले वन गएर राज्यको ऐश्वर्य (सुखसुविधाका सामान) त्यागिन् । वनमा छलले रावणले सीताको अपहरण गऱ्यो । तर उनले आफ्नो मर्यादाको सधैँ पालन गरिन् । उनी नेपालकी राष्ट्रिय विभूति हुन् । उनको विचार अनुकरणीय छ ।

## ३. अनुच्छेदं पठित्वा प्रश्नान् उत्तरयत

“पञ्चतन्त्रम्” नीतिशास्त्रेषु एकः प्रमुखः ग्रन्थः अस्ति। अस्य ग्रन्थस्य रचयिता विष्णुशर्मा वर्तते। अस्मिन् ग्रन्थे पञ्च खण्डाः सन्ति। तेषु प्रथमः “मित्रभेदः” अस्ति। अस्मिन् खण्डे मित्रेषु कथं वैमनस्यं जायते इति व्यक्तम् अस्ति। द्वितीयः खण्डः “मित्रसम्प्राप्तिः” अस्ति। अस्मिन् मित्रस्य महत्त्वं वर्णितम् अस्ति। तृतीयः खण्डः “काकोलूकीयम्” अस्ति। अस्मिन् खण्डे काकानाम् उलूकानां च कथावर्णनम् अस्ति। कथाद्वारा उपयोगिनः सन्देशाः प्रदत्ताः सन्ति। चतुर्थः खण्डः “लब्धप्रणाशः” अस्ति। बुद्धिमान् बुद्धिबलेन जयति। मूर्खः लब्धस्य अपि नाशं करोति। चतुर्थे खण्डे एतादृशः विषयः प्रस्तुतः अस्ति। पञ्चमः खण्डः “अपरीक्षितकारकम्” अस्ति। सुपरीक्षितं कार्यम् एव सफलं भवति। अतः कार्यं विचार्य कर्तव्यम् इति शिक्षितं वर्तते।

“पञ्चतन्त्र” नीतिशास्त्रहरूमा एउटा मुख्य ग्रन्थ हो। यसका रचयिता विष्णुशर्मा हुन्। यसमा पाँच खण्ड छन्। तिनमा पहिलो “मित्रभेद” हो। यस खण्डमा साथीहरूमा कसरी मनमुटाव हुन्छ भन्नेबारे बताइएको छ। दोस्रो खण्ड “मित्रसम्प्राप्ति” हो। यसमा मित्रको महत्त्वको वर्णन छ। तेस्रो खण्ड “काकोलूकीय” हो। यस खण्डमा काग र उल्लुहरूको कथा छ। कथाबाट उपयोगी सन्देशहरू दिइएका छन्। चौथो खण्ड “लब्धप्रणाश” हो। बुद्धिमान्ले बुद्धिको बलले जित्छ। मूर्खले पाएको पनि नष्ट गर्छ। चौथो खण्डमा यस्तो विषय प्रस्तुत छ। पाँचौँ खण्ड “अपरीक्षितकारक” हो। यसमा विचार गरेर गरेको काम नै सफल हुन्छ। त्यसैले काम विचार गरेर गर्नुपर्छ भन्ने सिकाइएको छ।

(क) “पञ्चतन्त्रम्” कीदृशः ग्रन्थः अस्ति ?

(ख) पञ्चतन्त्रस्य रचनाकारः कः अस्ति ?

(ग) पञ्चतन्त्रे कति खण्डाः सन्ति ?

(घ) प्रथमखण्डे किं व्यक्तम् अस्ति ?

(ङ) द्वितीयखण्डस्य नाम किं वर्तते ?

(च) मूर्खः किं करोति ?

(छ) कीदृशं कार्यं सफलं भवति ?

४. अधस्तनीं कथां पठित्वा सन्देशं विमृशत

एकदा स्वशिष्यैः सह बुद्धः एकं ग्रामं प्राप्नोत् । तत्र मनुष्याः श्रद्धाहीनाः आसन् । ते बुद्धं निन्दन्ति स्म । तद् दृष्ट्वा एकः शिष्यः न्यवेदयत्, "गुरो ! अत्र वासः उचितः नास्ति । जनाः अभद्राः सन्ति । अन्यत्र गच्छाम ।" बुद्धः प्रत्यपृच्छत्, "अन्यत्र अपि दुर्व्यवहारः तु भवितुं शक्नोति । तदा किं करवाम ?" शिष्यः अवदत्, "ततः अपि अन्यत्र गच्छाम ।" स्मितं विहस्य बुद्धः अकथयत्, "कुत्रापि दुर्व्यवहारः तु भवितुं शक्नोति एव । यदि वयम् इतः गच्छामः, निन्दकाः बलिनः भवन्ति । समाजः दूषितः कलङ्कितः च भवितुं शक्नोति । परिस्थितिः कदाचित् विषमा अपि भवति । अतः समस्यायाः समाधानं कर्तव्यम्, पलायनं न ।" बुद्धः तत्रैव अतिष्ठत् । कालानन्तरम् अनुयायिनां सङ्ख्या वर्धमाना अभवत् । निन्दकाः न्यूनायमानाः च अभवन् ।

एकपटक आफ्ना शिष्यहरूसँग बुद्ध एउटा गाउँमा पुगे । त्यहाँ मानिसहरू श्रद्धा नभएका थिए । तिनीहरू बुद्धको निन्दा गर्दथे । त्यो देखेर एक शिष्यले भने, "गुरु, यहाँ बस्नु ठिक छैन । मानिसहरू अभद्र छन् । अन्तै जाऔँ ।" बुद्धले उल्टै सोधे, "अन्त पनि नराम्रो व्यवहार हुन सक्छ । त्यतिखेर चाहिँ के गरौँ ?" शिष्यले भने, "त्यहाँबाट पनि अन्त जाऔँ ।" मुस्कुराएर बुद्धले भने, "जहाँ पनि नराम्रो व्यवहार त हुन सक्छ नै । यदि हामी यहाँबाट गयौँ भने निन्दा गर्नेहरूलाई थप बल पुग्छ । समाज झन् दूषित र कलङ्कित बन्न सक्छ । अवस्था कहिलेकाहीँ नराम्रो हुन्छ । त्यसैले समस्याको समाधान गर्नुपर्छ, भाग्ने होइन ।" बुद्ध त्यहीँ बसे । केही समयपछि अनुयायीहरूको सङ्ख्या बढ्दै गयो । निन्दा गर्नेहरू घट्दै गए ।

५. कोष्ठकात् समुचितं विकल्पं विचित्य रिक्तस्थानं पूरयत

(क) स्वस्थ–लाभाय ................ न कथनीयम् । (सत्यम्, असत्यम्)

(ख) सफलतायै आत्मविश्वासः ............... । (आवश्यकः, अनावश्यकः)

(ग) द्+द .......... भवति। (द्द, द्य)

(घ) द्ध ............. मेलनेन भवति। (दवयोः, दधयोः)

(ङ) सन्ति ......... रूपं वर्तते। (एकवचनस्य, बहुवचनस्य)

६. लेख्यचिह्नानि विचार्य सस्वरं पठत

दिलमाया मगरः, बबिता थारू च सख्यौ आस्ताम् । एकदा ते विद्यालयं गच्छन्त्यौ आस्ताम्। दिलमाया अकथयत्, "त्वं तरणक्रीडां जानासि ?" बबिता उदतरत्, "न जानामि।" दिलमाया पुनः अकथयत्, "हाय ! तव जीवनं व्यर्थम्।" बबिता अवदत्, "किमर्थम् ?" दिलमाया अकथयत्, "तरणक्रीडां तु श्वानः अपि जानाति।" बबिता अपृच्छत्, "त्वं जानासि ?" दिलमाया उदतरत्, "अवश्यम्, जानामि।" बबिता अकथयत्, "तर्हि त्वयि च कः भेदः ?"

दिलमाया मगर र बबिता थारू साथी थिए। एकपटक ती दुई विद्यालय जाँदै थिए। दिलमायाले भनिन्, "तिमी पौडी खेल जान्दछ्यौ ?" बबिताले उत्तर दिइन्, "जान्दिनँ।" दिलमायाले फेरि भनिन्, "हाय ! तिम्रो जीवन व्यर्थ भयो।" बबिताले भनिन्, "किन ?" दिलमायाले भनिन्, "पौडी खेल त कुकुर पनि जान्दछ।" बबिताले सोधिन्, "तिमी जान्दछ्यौ ?" दिलमायाले भनिन्, "अवश्य जान्दछु।" बबिताले भनिन्, "त्यसो भए तिमी र कुकुरमा के फरक रह्यो त ?"

७. प्रथमाविभक्तेः रूपाणि दृष्ट्वा निर्देशानुसारं रूपं पठित्वा निर्देशनानुसारेण रूपाणि च वदत। प्रथमा–विभक्तेः रूपाणि पठित्वा सङ्केतानुसारेण रूपाणि वदत

**पुरुषशब्दः (अकारान्तः)**

| पुँल्लिङ्गे | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| | पुरुषः | पुरुषौ | पुरुषाः |

**गायिकाशब्दः (आकारान्तः)**

| स्त्रीलिङ्गे | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| | गायिका | गायिके | गायिकाः |

**फलशब्दः (अकारान्तः)**

| | | | |
|---|---|---|---|
| नपुंसकलिङ्गे | एकवचनम् | द्विवचनम् | बहुवचनम् |
| | फलम् | फले | फलानि |

**कविशब्दः (इकारान्तः)**

| | | | |
|---|---|---|---|
| पुँल्लिङ्गे | एकवचनम् | द्विवचनम् | बहुवचनम् |
| | कविः | कवी | कवयः |

**नदीशब्दः (ईकारान्तः)**

| | | | |
|---|---|---|---|
| स्त्रीलिङ्गे | एकवचनम् | द्विवचनम् | बहुवचनम् |
| | नदी | नद्यौ | नद्यः |

**गुरुशब्दः (उकारान्तः)**

| | | | |
|---|---|---|---|
| पुँल्लिङ्गे | एकवचनम् | द्विवचनम् | बहुवचनम् |
| | गुरुः | गुरू | गुरवः |

**वधूशब्दः (ऊकारान्तः)**

| | | | |
|---|---|---|---|
| स्त्रीलिङ्गे | एकवचनम् | द्विवचनम् | बहुवचनम् |
| | वधू | वध्वौ | वध्वः |

**मनस्-शब्दः (सान्तः)**

| | | | |
|---|---|---|---|
| नपुंसकलिङ्गे | एकवचनम् | द्विवचनम् | बहुवचनम् |
| | मनः | मनसी | मनांसि |

**प्रश्नाः**

(क) निपुणशब्दस्य प्रथमाविभक्तेः बहुवचनस्य रूपं किम् ?

(ख) अध्यापिकाशब्दस्य प्रथमाविभक्तेः द्विवचनस्य रूपं किम् ?

(ग) पत्रशब्दस्य प्रथमाविभक्तेः बहुवचनस्य रूपं किम् ?

(घ) अरिशब्दस्य प्रथमाविभक्तेः एकवचनस्य रूपं किम् ?

(ङ) सुन्दरीशब्दस्य प्रथमाविभक्तेः बहुवचनस्य रूपं किम् ?

(च) भानुशब्दस्य प्रथमाविभक्तेः द्विवचनस्य रूपं किम् ?

(छ) यवागूशब्दस्य प्रथमाविभक्तेः द्विवचनस्य रूपं किम् ?

(ज) पयस्–शब्दस्य प्रथमाविभक्तेः द्विवचनस्य रूपं किम् ?

८. अधस्तनस्य अनुच्छेदस्य मौनपठनं कुरुत

प्रभातस्य समयः अस्ति । सूर्यः उदीयमानः वर्तते । सूर्यस्य किरणाः हिमालये पतिताः सन्ति । हिमालयः उन्नतः अस्ति । वयं किरणैः हिमालयं स्वर्णिमं पश्यामः । हिमालयस्य अधोभागे नद्यः वहन्ति । आकाशः स्वच्छः वर्तते । अत्रत्यं पर्यावरणं सुन्दरम् अस्ति । सूर्यः प्राणिनां मित्रम् अस्ति । एष सर्वान् जागरयति । प्रातः हिमालयः सूर्यं प्रतीक्षते । सूर्यः च प्रथमं हिमालये उदेति । सूर्यः सर्वान् उपकरोति । वयम् अपि प्राणिनाम् उपकारं करवाम ।

बिहानीको समय छ । सूर्य उदाउँदै छ । सूर्यका किरणहरू हिमालमा परेका छन् । हिमाल अग्लो छ । हामी किरणहरूले गर्दा हिमाल सुनौलो रङ्को देख्छौँ । हिमालको तलतिर नदीहरू बग्छन् । आकाश सफा छ । यहाँको वातावरण सुन्दर छ । सूर्य प्राणीहरूको साथी हो । यसले सबैलाई जगाउँछ । बिहानमा हिमालले सूर्यलाई पर्खन्छ । सूर्य पनि पहिला हिमालमा उदाउँछ । सूर्य सबैको भलाइ गर्छ । हामी पनि प्राणीहरूको भलाइ गरौँ ।

## लेखनम्

१. अधस्तनानि पदानि लिखत

उत्तरदिशि, किञ्चित्, प्राप्नोत्, अन्विष्य, विद्यते, श्रुत्वा, न्यवेदयत्, अन्वेषणीयम्, पार्श्वे, प्रतीक्षाम्, भाण्डागारः, दृष्ट्वा, भूम्याम्, आत्मविश्वासः ।

२. वाक्येषु प्रयोगं कुरुत

सुन्दरः, भाण्डे, दण्डेन, मार्गम्, वृत्तान्तम्, शक्तिः, कारणम्, विस्मितः, ततः, तदा, तत्र ।

३. पाठस्य उपान्तिमस्य अनुच्छेदस्य अनुलेखनं कुरुत ।

४. पाठस्य अन्तिमम् अनुच्छेदं शिक्षकस्य मुखात् श्रुत्वा लिखत।

५. अधस्तनं श्लोकं तस्य भावार्थं च पठित्वा प्रश्नान् उत्तरयत

कारणान्मित्रतामेति कारणादेति शत्रुताम्।
तस्मान्मित्रत्वमेवाऽत्र योज्यं वैरं न धीमता॥

भावार्थः – मित्रस्य भावः मित्रता वर्तते। कारणाद् एव मित्रता भवति। तथा एव कारणात् शत्रुता च भवति। कारणेन विना मित्रता शत्रुता च न भवतः। बुद्धिमान् मनुष्यः मित्रतां करोति। स वैरं न साधयति। यतः अस्मिन् लोके मित्रता श्रेष्ठा भवति।

साथीको भावना मित्रता हो। कारणबाट नै मित्रता हुन्छ। त्यसैगरी कारणबाट नै शत्रुता पनि हुन्छ। विना कारण मित्रता र शत्रुता हुँदैन। बुद्धिमान् मानिसले मित्रता गाँस्छ। ऊ शत्रुता गर्दैन। किनकि यस लोकमा मित्रता राम्रो हुन्छ।

(क) मित्रता का अस्ति ?

(ख) मित्रता कथं भवति ?

(ग) कारणेन विना किं किं न भवति ?

(घ) बुद्धिमान् किं करोति ?

(ङ) मित्रता शत्रुता वा का श्रेष्ठा ?

६. पाठस्य द्वितीयम् अनुच्छेदं सम्यग् अधीत्य प्रदत्तानि कार्याणि कुरुत

(क) एकपदेन उत्तरयत

(अ) एकदा कः मन्दिरं प्राप्नोत् ?

(आ) साधुः किं कर्तुम् उद्यतः आसीत् ?

(इ) कः विनम्रः अभवत् ?

(ई) विडालाद् कः शक्तिमान् भवति ?

(ख) एकवाक्येन उत्तरयत

(अ) साधुः कुत्र न आगच्छत् ?

(आ) "अहम् इतः परम् अत्र न आगमिष्यामि" इति कः अकथयत् ?

(इ) साधोः कृते किं महत्त्वपूर्णं विद्यते ?

(ई) साधुः किम् अकथयत् ?

(ग) भाषिककार्यं कुरुत

(अ) "एकः" अस्य वचनं किम् ?

(आ) "आगच्छत्" अस्य कालः कः ?

(इ) "मया सह मेलनस्य समयः नास्ति" अत्र अव्ययपदं किम् ?

(ई) "मूषकः" अस्य विभक्तिः का ?

७. प्रदत्तपदानां विपरीतार्थिपदानि अधस्तनाद् अनुच्छेदाद् अन्विष्य लिखत

चाणक्यः महान् नीतिज्ञः आसीत् । बहवः विद्वांसः तस्य विषये शोधम् अकुर्वन्। आचार्यः विष्णुगुप्तः अपि स एव इति वदन्ति। तदानीं तक्षशिलानामकं शिक्षणसंस्थानम् आसीत्। चाणक्यः तत्र अपठत्। पश्चात् तत्र एव अध्यापकः अभवत्। स राजनीतिज्ञः आसीत्। सः अर्थशास्त्री च आसीत्। सम्राट् चन्द्रगुप्तः तस्य शिष्यः आसीत्। तस्य "चाणक्यनीतिः" प्रसिद्धः ग्रन्थः अस्ति। "अर्थशास्त्रम्" च स विष्णुगुप्तनाम्ना अरचयत् । चाणक्यस्य आधुनिके समाजे अपि प्रशंसा भवति।

चाणक्य महान् नीतिज्ञ थिए। धेरै विद्वान्हरूले उनीबारे खोज गरे। आचार्य विष्णुगुप्त पनि उनी नै हुन् भन्दछन्। त्यतिखेर तक्षशिला नाम गरेको शिक्षण संस्था थियो । चाणक्यले त्यहाँ पढे । पछि त्यहीँ अध्यापक भए । उनी राजनीतिज्ञ थिए। उनी अर्थशास्त्री पनि थिए। सम्राट् चन्द्रगुप्त उनकै शिष्य थिए । उनको "चाणक्यनीति" नाम गरेको प्रसिद्ध किताब छ। "अर्थशास्त्र" चाहिँ उनले विष्णुगुप्त नामबाट रचना गरे। चाणक्यको अहिलेको समाजमा पनि प्रशंसा हुन्छ।

| | | | |
|---|---|---|---|
| (क) न्यूनाः | .................. | (ख) मूर्खाः | .................. |
| (ग) एते | .................. | (घ) इदानीम् | .................. |
| (ङ) अत्र | .................. | (च) पूर्वम् | .................. |
| (छ) अध्येता | .................. | (ज) प्रजा | .................. |
| (झ) गुरुः | .................. | (ञ) अप्रसिद्धः | .................. |
| (ट) प्राचीने | .................. | (ठ) निन्दा | .................. |

८. शिक्षकस्य सहयोगेन पाठस्य कथायाः सन्देशं लिखत।

## व्याकरणानुशीलनम्

१. सारिणीं पठित्वा तदनुवर्तिनां शब्दानां सन्धिविच्छेदं कुरुत

| सन्धिस्थानम् | उदाहरणानि |
|---|---|
| अ+अ = आ | अत्र+अपि = अत्रापि |
| अ+आ = आ | हिम+आलयः = हिमालयः, |
| आ+अ = आ | वाटिका+अस्ति = वाटिकास्ति |
| आ+आ = आ | विद्या+आलयः = विद्यालयः |

तवापि, अत्रागच्छ, तथास्तु, रमागता

२. सारिणीं पठित्वा तदनुवर्तिनां शब्दानां सन्धिं कुरुत

| सन्धिस्थानम् | उदाहरणानि |
|---|---|
| इ+इ = ई | कवि+इन्द्रः = कवीन्द्रः |
| इ+ई = ई | अधि + ईशः = अधीशः |
| ई+इ = ई | लक्ष्मी+इन्दुः = लक्ष्मीन्दुः |
| ई+ई = ई | सती+ईशः = सतीशः |

रवि+इन्द्रः, कपि+ईश्वरः, देवी+इच्छा, क्षिति+ईश्वरः, गौरी+ईश्वरौ

३. सारिणीं पठित्वा प्रदत्तवाक्येभ्यः दीर्घसन्धियुतान् शब्दान् लिखत

| सन्धिस्थानम् | उदाहरणानि |
|---|---|
| उ+उ = ऊ | भानु+उदयः = भानूदयः |
| उ+ऊ = ऊ | सिन्धु+ऊर्मिः = सिन्धूर्मिः |
| ऊ+उ = ऊ | वधू+उत्साहः = वधूत्साहः |
| ऊ+ऊ = ऊ | भू+ऊर्ध्वम् = भूर्ध्वम् |

(क) छात्राः गुरूपदेशं श्रोतुम् इच्छन्ति।

(ख) गुरुः तान् साधूपदेशं श्रावयति।

(ग) वधूत्साहं दृष्ट्वा एव श्वश्रूत्साहः वर्धते।

४. सन्धिं सन्धिविच्छेदं वा कृत्वा अधस्तनम् अनुच्छेदं पुनः लिखत

रात्रिः जाता। मूषकः चौर्यार्थम् अगच्छत्। भाण्डम् उपरि स्थापितम् आसीत्। स तत् प्राप्तुम् न अशक्नोत्। भूम्याम् अपतत्। तस्मिन् एव समये साधुः दण्डेन तं प्राहरत्। भयत्रस्तः स ततः पलायितवान्। यदा तस्य अन्नस्य भाण्डागारम् आसीत् तदा आत्मविश्वासः आसीत्। आत्मविश्वासः शक्तिम् अजनयत्। तेन कारणेन सः अन्नं चोरयितुं सक्षमः अभवत्। यदा आत्मविश्वासः गतः तदा स दैनन्दिनं कार्यं कर्तुम् एव न अशक्नोत्। पश्चात् स तत्र कदापि न आगच्छत्।

५. लट्लकारस्य रूपाणि पठत

**भूधातुः**

| लट्लकारः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमः पुरुषः | भवति | भवतः | भवन्ति |
| मध्यमः पुरुषः | भवसि | भवथः | भवथ |
| उत्तमः पुरुषः | भवामि | भवावः | भवामः |

**रच्धातुः**

| लट्लकारः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमः पुरुषः | रचयति | रचयतः | रचयन्ति |
| मध्यमः पुरुषः | रचयसि | रचयथः | रचयथ |
| उत्तमः पुरुषः | रचयामि | रचयावः | रचयामः |

६. अधस्तनानि क्रियापदानि दृष्ट्वा तेषां लट्लकारस्य सर्वाणि रूपाणि लिखत

(क) गच्छति (ख) हसति (ग) धावति (घ) खेलति

७. रिक्तस्थानं पूरयत

| एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|
| बालकः नृत्यति। | बालकौ ..........। | बालकाः .........। |
| अश्वः ...........। | अश्वौ धावतः। | अश्वाः ............। |
| गजः ........। | गजौ ...........। | गजाः पिबन्ति। |

८. वाक्यं परिवर्तयत

| | | |
|---|---|---|
| अहं पठामि | आवां पठावः | वयं पठामः। |
| (क) अहं हसामि। | ............... | ............... |
| (ख) ............... | आवां गच्छावः। | ............... |
| (ग) ............... | ............... | वयं खेलामः। |
| (घ) ..... पश्यामि। | ................ | ............... |

७. अधस्तनं श्लोकं पठित्वा लट्लकारस्य क्रियापदानि विचित्य लिखत

ददाति प्रतिगृह्णाति गुह्यमाख्याति पृच्छति।

भुङ्क्ते भोजयते चैव षड्विधं प्रीतिलक्षणम्॥

## ८. लङ्लकारस्य रूपाणि पठत

| लङ्लकारः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| भू-धातुः | | | |
| प्रथमः पुरुषः | अभवत् | अभवताम् | अभवन् |
| मध्यमः पुरुषः | अभवः | अभवतम् | अभवत |
| उत्तमः पुरुषः | अभवम् | अभवाव | अभवाम |
| रच्-धातुः | | | |
| प्रथमः पुरुषः | अरचयत् | अरचयताम् | अरचयन् |
| मध्यमः पुरुषः | अरचयः | अरचयतम् | अरचयत |
| उत्तमः पुरुषः | अरचयम् | अरचयाव | अरचयाम |
| कृ-धातुः | | | |
| प्रथमः पुरुषः | अकरोत् | अकुरुताम् | अकुर्वन् |
| मध्यमः पुरुषः | अकरोः | अकुरुतम् | अकुरुत |
| उत्तमः पुरुषः | अकरवम् | अकुर्व | अकुर्म |
| अस्-धातुः | | | |
| प्रथमः पुरुषः | आसीत् | आस्ताम् | आसन् |
| मध्यमः पुरुषः | आसीः | आस्तम् | आस्त |
| उत्तमः पुरुषः | आसम् | आस्व | आस्म |

## ९. निर्देशानुसारेण लङ्लकारस्य रूपैः रिक्तस्थानानि पूरयत

| **चल्-धातुः** | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमः पुरुषः | ........ | ........ | ........ |
| मध्यमः पुरुषः | ........ | अचलतम् | ........ |
| उत्तमः पुरुषः | ........ | ........ | ........ |

**दृश्-धातुः**

| | | | |
|---|---|---|---|
| प्रथमः पुरुषः | अपश्यत् | ........ | ........ |
| मध्यमः पुरुषः | ........ | ........ | ........ |
| उत्तमः पुरुषः | ........ | ........ | ........ |

**वद्-धातुः**

| | | | |
|---|---|---|---|
| प्रथमः पुरुषः | ........ | ........ | ........ |
| मध्यमः पुरुषः | ........ | ........ | ........ |
| उत्तमः पुरुषः | ........ | ........ | अवदाम |

**नम्-धातुः**

| | | | |
|---|---|---|---|
| प्रथमः पुरुषः | ........ | ........ | अनमन् |
| मध्यमः पुरुषः | ........ | ........ | ........ |
| उत्तमः पुरुषः | ........ | ........ | ........ |

**धाव्-धातुः**

| | | | |
|---|---|---|---|
| प्रथमः पुरुषः | ......... | ........ | ........ |
| मध्यमः पुरुषः | ........ | ........ | ........ |
| उत्तमः पुरुषः | अधावम् | ........ | ........ |

१०. पदानि परस्परं संयोज्य वाक्यानि रचयत

| | | |
|---|---|---|
| अहम् | | अरचयताम् |
| छात्राः | | अरचयत् |
| वयम् | | अरचयत |
| अग्रजा | साहित्यम् | अरचयम् |
| त्वम् | | अरचयः |
| लेखकौ | | अरचयाम |
| यूयम् | | अरचयन् |

## रचनात्मकः अभ्यासः

१. पूर्वं पठितां श्रुतां वा नीतिकथां स्वभाषया कक्षायां श्रावयित्वा सन्देशं च कथयत।

२. मित्राणां नाम लिखित्वा तेषाम् एकैकं साधुस्वभावं लिखत

| मित्राणां नामानि | साधुस्वभावः |
|---|---|
| १. | |
| २. | |
| ३. | |
| ४. | |
| ५. | |

### श्रवणपाठः

मित्रं मित्रैः सह प्रेम करोति। जीवनाय बहूनां सामग्रीणाम् आवश्यकता भवति। आवश्यक्यः सर्वाः सामग्र्यः उपलब्धाः न भवन्ति। तदा मित्रं सहायतां करोति। मित्रम् एव मित्राय ददाति। मित्रं मित्राद् गृह्णाति च। मित्रेषु मित्राणां कृते सद्भावः भवति। अतः मित्रं दुरवस्थायां सहयोगं करोति। सहयोगं याचते च। मित्रं गोपनीयम् अपि कथयति। मित्रं प्रश्नं पृच्छति। जिज्ञासाम् उपस्थापयति। समस्यां कथयति। समाधानम् च इच्छति। मित्रम् उपायं चिन्तयति। उपायस्य आदानं प्रदानं च करोति। मित्रं मित्रस्य खादति। स्वमित्रं खादयति च। केवलं स्वयम् एव वस्तूनाम् उपभोगं न करोति। मित्राणाम् उपभोगाय च वस्तूनि सङ्कलयति। मित्रवान् दुःसाध्यान् विषयान् अपि साधयति। इह लोके बुद्धिमान् मानवः सर्वैः सह मित्रतां करोति। वैरभावः कार्यं विनाशयति। वैरं हानये एव भवति। वैरभावेन कदाचिद् अपि लाभः न भवति। अतः वैराद् मैत्री उत्तमा अस्ति।

तृतीयः पाठः

# उचितः आहारः

**पाठप्रवेशः** **त्रिविधः आहारः**

यमनस्य यशस्विन्याश्च गृहं समीपे अस्ति। अद्य अवकाशः वर्तते। अतः यशस्विनी यमनश्च मार्गे मिलतः, तौ वार्तालापं कुरुतः।




यमनः यशस्विनि ! आहारस्य विषये जानासि किम् ?

यशस्विनी किञ्चित् जानामि खलु।

यमनः वदतु तर्हि, किं जानासि ?

यशस्विनी उत्तमः आहारः उत्तमं चिन्तनं जनयति इति जानामि। मम माता ह्यः एव माम् एतद् अशिक्षयत्।

यमनः अवश्यम्। आहारः शुद्धः भवतु। तदा मनः शुद्धं भवति इति आचार्याः वदन्ति। शुद्धे मनसि चिन्तनम् अपि उत्तमम् एव भवति।

यशस्विनी जानासि यमन ! आहारः कतिविधः भवति ?

यमनः आहारः बहुविधः भवति। आहारः कतिविधः भवति इति निश्चित्य वक्तुं न शक्यते।

यशस्विनी नहि नहि। आहारः त्रिविधः भवति इति भगवद्गीतायाम् उल्लिखितम् अस्ति। मम पिता एवं कथयति।

यमनः एवम् ? वद के ते त्रिविधाः आहाराः ?

यशस्विनी सात्त्विकः आहारः, राजसः आहारः, तामसः आहारः च।

यमनः इदानीं तु अहम् अपि अजानाम्, सात्त्विकः, राजसः, तामसः चेति आहारः त्रिविधः भवति। गच्छामि यशस्विनि ! मम भोजनवेला अभवत्।

यशस्विनी मम गृहे अपि भोजनस्य समयः अभवत्। गच्छाव तावत्। नमस्कारः पुनर्मिलाव।

यमनः नमस्कारः, पुनर्मिलाव। (द्वौ एव स्वगृहं प्रति गच्छतः।)

यमन यशस्विनीलाई आहारका विषयमा सोध्छ। उनी आफूले थोरै जानेको भन्दै राम्रो आहारले राम्रो चिन्तन जन्माउने कुरो गर्छिन्। त्यो कुरालाई समर्थन गर्दै यमन भन्छ– आहार शुद्ध भयो भने मन शुद्ध हुन्छ र मन शुद्ध भएमा चिन्तन पनि राम्रै होला। आहार कति प्रकारको हुन्छ भन्ने प्रश्नमा यमन भन्छ– आहार धेरै प्रकारको हुने हुनाले यति नै प्रकारका भनेर निश्चयपूर्वक भन्न सकिँदैन। यशस्विनी भनिन्छ, "मेरो बुबाले भन्नुभएको आहार तीन प्रकारको हुन्छ, यो कुरा भगवद्‌तगीतामा भनिएको छ रे।" सात्त्विक, राजस र तामस ती तीन प्रकार भएको तथ्य पनि उनी यमनलाई बताउँछिन्। यत्तिकैमा आफ्नो भोजनको वेला भएको भन्दै यमन बिदा हुन खोज्छ। यशस्विनी पनि आफ्नो घरमा समेत यो समय भोजनकै भएको बताउँछिन्। दुवै जना फेरि भेटौँला भन्दै आआफ्ना घरतर्फ लाग्छन्।

**मूलपाठः** 

# उचितः आहारः



संसारे अनेके प्राणिनः सन्ति। प्राणधारणाय आहारः आवश्यकः भवति। अतः सर्वे आहारं स्वीकुर्वन्ति । बुभुक्षितः प्राणी आहारम् इच्छति। बुभुक्षा शाम्यति। आहारेण प्राणिनः आहारं तध्वा प्राणी प्रसन्नः भवति।

पौष्टिकस्य आहारस्य ग्रहणेन शरीरस्य पोषणं भवति। पुष्टे शरीरे मानसं च तुष्टं भवति। उचितेन आहारेण मस्तिष्कम् अपि सम्यक् कार्यं करोति । जनः सम्यक् विचारयितुं शक्नोति। स कार्यं कर्तुं च समर्थः भवति। अतः समये उचितः आहारः ग्रहणीयः।

प्राणिषु केचित् शाकाहारिणः, केचित् च मांसाहारिणः सन्ति। मांसाहारिणां प्राणिनां तीक्ष्णाः नखाः दन्ताः च भवन्ति। तद्रहितास्तु शाकाहारिणः सन्ति। गावः, महिषाः, घोटका चः शाकाहारिणः प्राणिनः सन्ति। वृकाः, व्याघ्राः, सिंहाः च मांसाहारिणः सन्ति।

शरीरस्य संरचनानुसारेण आहारः निश्चितः भवति। निश्चितः आहारः सर्वेषां कृते स्वस्थकरः भवति। मनुष्यः अपि शाकाहारी प्राणी अस्ति। अतः शाकाहारेण एव मनुष्यः स्वस्थः भवति।

जीवने सर्वदा अनुशासनं पालनीयम्। भोजनस्य अपि अनुशासनं भवति। भोजनं कदा कर्तव्यम् ? भोजनं कथं करणीयम् ? भोजनं कियद् ग्रहणीयम् ? इति अनेकेषां प्रश्नानाम् उत्तराणि भोजनस्य नियमान् प्रस्तुवन्ति। नियमानाम् आधारेण भोजनस्य ग्रहणं लाभकरं भवति।

"अन्नं न निन्द्यात्" इति शास्त्रस्य वचनम्। "नित्यं भोजनं पूजयेत्, भोजनं दृष्ट्वा प्रसन्नः भवेत्, निन्दाम् अकृत्वा एव भक्षयेत्" इत्यादयः अपि नियमाः सन्ति। तथैव

शास्त्रेषु उचितस्य आहारस्य विषये चिन्तनं बहु अस्ति। "कस्मिन् काले किं पेयम् ?" कस्मिन् काले किं न पेयम् इति च शास्त्रम् एव निर्दिशति। यथा–

भोजनान्ते पिबेत्तक्रं दिनान्ते च पिबेत् पयः।

निशान्ते तु पिबेद् वारि तस्य रोगो न विद्यते॥

भोजनस्य काले पीतं जलं विषसमानं भवति। अतः शास्त्रं तदा जलपानं निषेधति। जलपानं भोजनस्य किञ्चित् कालानन्तरम् एव उत्तमं भवति। प्रातःकाले जलपानम् अत्युत्तमं भवति परन्तु दुग्धपानं चायपानं च हानिकरम्। रात्रौ शयनात् किञ्चित् कालात् पूर्वं दुग्धपानम् उत्तमं भवति। भोजनकाले तु तक्रपानं करणीयम्। एवम् अन्नपानादीनाम् औचित्यस्य अनौचित्यस्य च विषये शास्त्रे पर्याप्तं निर्देशनम् अस्ति। तदेव सर्वेषां कृते हितकरं भवति।

संसारमा अनेक किसिमका प्राणीहरू छन्। उनीहरूलाई प्राण धान्नका लागि आहार आवश्यक हुन्छ। त्यसैले सबै प्राणी आहार खान्छन्। भोकाएकाले खानेकुरा चाहन्छ र पाएपछि खान्छ। त्यसबाट भोक मेटिएपछि ऊ प्रसन्न हुन्छ।

पौष्टिक आहारले शरीरको पोषण हुन्छ। शरीर पुष्ट भएमा मन पनि खुसी हुन्छ। उचित आहारद्वारा मस्तिष्कसमेत राम्रो हुने हुँदा समयमा उचित खानेकुरा खानुपर्छ।

कोही शाकाहारी र कोही मांसाहारी प्राणी छन्। तिखा दाह्रा, नङ्ग्रा भएका सिंह, बाघ आदि मांसाहारी प्राणी हुन् भने नभएका गाई, घोडा आदि शाकाहारी प्राणी हुन्। त्यस्तै मान्छे पनि शाकाहारी प्राणी हो, शाकाहारले नै मानिस स्वस्थ हुन्छ।

भोजनको पनि अनुशासन हुन्छ। कहिले, कसरी र कति मात्रामा खाने भन्ने नियम हुन्छ। त्यही नियमअनुसार खाँदा शरीर स्वस्थ रहन्छ। शास्त्रमा यसका बारेमा थुप्रै व्याख्यान पाइन्छन्। त्यसैले शास्त्रले भनेको अनुसार नै आहार लिनु सबैका निम्ति हितकर हुन्छ।

## शब्दार्थाः

| मूलशब्दः | संस्कृते पर्यायः | नेपाल्याम् अर्थः | आङ्गलभाषायाम् अर्थः |
|---|---|---|---|
| आहारः | भोजनम् | खानेकुरा | Food |
| प्राणी | जन्तुः | प्राणी | Creature |
| बुभुक्षा | क्षुधा | भोक | Hunger |
| मानसम् | मनः | मन | Mind |
| गौः | धेनुः | गाई | Cow |
| महिषः | घोटकारिः | राँगो | Male buffalo |
| वृकः | ईहामृगः | ब्वाँसो | Wolf |
| घोटकः | अश्वः | घोडा | Horse |
| सिंहः | मृगेन्द्रः | सिंह | Lion |
| व्याघ्रः | शार्दूलः | बाघ | Tiger |
| शाकाहारी | शाकादिभोजी | शाकाहारी | Vegetarian / Herbivores |
| मांसाहारी | मांसभोजी | मांसाहारी | Carnivore |
| तक्रम् | गोरसः | मोही | Whey |
| पयः | दुग्धम् | दुध | Milk |
| वारि | पानीयम् | पानी | Water |
| रोगः | आमयः | रोग | Disease |
| विषम् | गरलम् | विष | Poison |
| दधि | पयस्यम् | दही | Curd |

## श्रवणं भाषणञ्च

१. पाठस्य श्रवणानन्तरं सर्वे एकैकशः उच्चारयत, अन्ये च शृणुत।

२. मित्राद् अन्तिमम् अनुच्छेदं श्रुत्वा अधस्तनान् प्रश्नान् उत्तरयत

(क) भोजनस्य काले पीतं किं विषसमानं भवति ?

(ख) शास्त्रं कदा जलपानं निषेधति ?

(ग) जलपानं कदा अत्युत्तमं भवति ?

(घ) प्रातःकाले किं किं हानिकरम् ?

(ङ) कस्मिन् काले दुग्धपानम् उत्तमं भवति ?

(च) भोजनकाले किम्पानं करणीयम् ?

(छ) किम् अनुसृत्य आहारस्य ग्रहणं हितकरं भवति ?

३. अधस्तने पद्ये सम्यग् उच्चारयत

पूजयेदशनं नित्यम्, अद्याच्चैतदकुत्सयन्।
दृष्ट्वा हृष्येत् प्रसीदेच्च प्रतिनन्देच्च सर्वशः॥
पूजितं ह्यशनं नित्यं बलमूर्जं प्रयच्छति।
अपूजितं तु तद् भुक्तमुभयं नाशयेदिदम्॥

| |
|---|
| नित्य सत्कारपूर्वक भोजनग्रहण गर्नुपर्छ। भोजन प्राप्त हुनासाथै त्यसलाई हेरेर मन प्रसन्न बनाउनुपर्छ। खुसी हुनुपर्छ र भोजनको निन्दा नगरीकन खानुपर्छ। भोजन गरिसकेपछि पनि यसैगरी अन्न प्राप्त भइरहोस् भनी त्यसको स्वागत गर्नुपर्छ। पूजा वा सत्कार गरिएको अन्नले सधैँ शक्ति र स्फूर्ति प्रदान गर्छ। सत्कार नगरिएको अन्नले भने ती दुवैलाई नष्ट गरिदिन्छ। |

४. पाठस्य पद्यं श्रुत्वा शिक्षकस्य साहाय्येन तस्य अन्वयं कुरुत।

५. शिक्षकात् श्रुत्वा अधस्तनानि पदानि स्पष्टम् अनुवाचयत

अन्नम्, शास्त्रस्य, निन्द्यात्, नित्यम्, पूजयेत्, दृष्ट्वा, प्रसन्नः, निन्दाम्, भक्षयेत्, इत्यादयः, नियमाः, तथैव, आहारस्य, चिन्तनम्, कस्मिन्, पेयम्, निर्दिशति।

६. पाठस्य पद्यस्य सामूहिकवाचनं कुरुत।

७. अधस्तनानि वाक्यानि सम्यक् उच्चार्य श्रावयत

(क) चणकस्य पौष्टिकं सक्तुकं कथयत।

(ख) अहं कार्यालये दिवा बुभुक्षितः भविष्यामि।

(ग) मनुष्यः प्रकृत्या एव शाकाहारी अस्ति।

(घ) भोजनस्य नियमाः अवश्यं पालनीयाः।

(ङ) तक्रं स्वादु पेयं द्रव्यम् अस्ति।

८. सत्यवाक्ये "आम्" इति वदत, असत्यवाक्ये तु "नहि नहि" इति वदत

(क) अन्नं न निन्द्यात् इति शास्त्रस्य वचनम्।

(ख) भोजनं कदाचित् एव पूजयेत्।

(ग) भोजनं दृष्ट्वा खिन्नः भवेत्।

(घ) भोजनस्य निन्दां न कुर्यात्।

(ङ) शास्त्रेषु उचितस्य आहारस्य चिन्तनम् अस्ति।

९. पाठस्याशयं स्वमातृभाषायां कक्षायां श्रावयत।

१०. पाठस्य आहारविषयकं सन्देशं पञ्चभिः वाक्यैः वर्णयत।

## पठनम्

१. शिक्षकसाहाय्येन श्लोकं पठित्वा विमृशत

१. पाठस्य प्रथम-द्वितीययोः अनुच्छेदयोः द्रुतपठनं कुरुत।

२. पाठस्य चतुर्थस्य अनुच्छेदस्य लेख्यचिनानुकूलं पठनं कुरुत।

३. पाठस्य उपान्तिमस्य अनुच्छेदस्य मौनपठनं कुरुत।

४. प्रदत्तं गद्यांशं पठित्वा अधस्तनान् क्रियाकलापान् कुरुत

आहारः त्रिविधः भवति। भगवद्गीतायाम् त्रिविधस्य आहारस्य विषये लिखितम् अस्ति। रस्यः, स्निग्धः, मनोह्लादकः च आहारः सात्त्विकः भवति। सात्त्विकः

आहारः आयुः वर्धयति, बलं वर्धयति, आरोग्यम्, आनन्दं च सम्पादयति । अतः सात्त्विकः आहारः आहारेषु उत्तमः मन्यते ।

अतीव कटुः, अम्लः, लवणः, उष्णः, तीक्ष्णः, रुक्षः च आहारः राजसः भवति । एतादृशः आहारः शरीरे दाहम्, रोगम्, मनसि चिन्तां च उत्पादयति ।

अर्धपक्वः, विरसः, दुर्गन्धयुतः, पूर्वदिने निर्मितः, अपवित्रः, उच्छिष्टः च आहारः तामसः भवति । एतादृशः आहारः रोगकरः तु भवति एव, सहैव मनोविक्षेपकरः च भवति ।

सात्त्विकाः जनाः सदैव सात्त्विकम् आहारं स्वीकुर्वन्ति । ते वपुषा मनसा च शोभनाः भवन्ति । तेषां मस्तिष्कम् अपि उत्तमं भवति । एतादृशाः जनाः निरामयं जीवनं यापयन्ति । कदाचित् आमययुक्ताः अपि शीघ्रं स्वस्थाः भवन्ति । एते स्वकार्यं सम्यक् सम्पादयितुं क्षमाः भवन्ति ।

आहार तीन प्रकारको हुन्छ । तीन प्रकारका आहारको विषयमा भगवद्गीतामा लेखिएको छ । सात्त्विक आहार रसयुक्त, चिप्लो र मनलाई प्रसन्न गराउने किसिमको हुन्छ । सात्त्विक आहारले आयु र शारीरिक बल बढाउँछ । यसले स्वस्थता र आनन्द दिन्छ । त्यसैले सात्त्विक आहार सबै आहारहरूमा उत्तम मानिन्छ ।

अत्यन्तै पिरो, अमिलो, नुनिलो, तातो, तिखो र रुखो खानेकुरा राजस आहार हो । यस्तो आहारले शरीरमा जलन र रोग पैदा गर्छ ।

आधा पाकेको, सुक्खा, दुर्गन्धित, रात बितेको, अशुद्ध र जुठो खानेकुरा तामस आहार हो । यस्तो आहारले रोग उत्पन्न गर्छ । साथसाथै यसले मनमा बेचैनी पनि पैदा गर्छ ।

सात्त्विक मानिसहरू सधैँ सात्त्विक आहार नै लिन्छन् । उनीहरूको शरीर र मन दुवै राम्रो हुन्छ । उनीहरूको मस्तिष्क पनि राम्रो हुन्छ । यस्ता मानिसहरू नीरोगी जीवन जिउँछन् । कहिलेकाहीँ रोग लागिहाल्यो भने पनि छिट्टै स्वस्थ हुन्छन् । यिनीहरू आफ्नो काम राम्ररी सम्पन्न गर्न सक्ने हुन्छन् ।

(क) बोधपाठस्य आधारेण अधस्तनान् प्रश्नान् उत्तरयत

(अ) त्रिविधस्य आहारस्य विषये कुत्र लिखितम् अस्ति ?

(आ) सात्त्विकः आहारः किं किं वर्धयति ?

(इ) कीदृशः आहारः शरीरे दाहम् उत्पादयति ?

(ई) के सदैव सात्त्विकम् आहारं स्वीकुर्वन्ति ?

(उ) सात्त्विकाः जनाः कीदृशं जीवनं यापयन्ति ?

(ख) बोधपाठस्य सन्देशं कथयत।

(ग) बोधपाठस्य अन्तिमस्य अनुच्छेदस्य आधारेण अधः विलुप्तानि पदानि वदत

सात्त्विकाः जनाः .......... सात्त्विकम् .......... स्वीकुर्वन्ति। ते .......... मनसा च .......... भवन्ति। .......... मस्तिष्कम् अपि .......... भवति। .......... जनाः .......... जीवनं यापयन्ति। कदाचित् .......... अपि शीघ्रं स्वस्थाः ..........। एते स्वकार्यं .......... सम्पादयितुं .......... भवन्ति।

(घ) सात्त्विकस्य आहारस्य उत्तमतायाः विषये बोधपाठाधारेण कक्षाविमर्शं कुरुत।

## लेखनम्

१. पाठस्य पद्यं पठित्वा रिक्तस्थानेषु समुचितानि पदानि लिखत

(क) भोजनान्ते .......... पिबेत्।

(ख) दिनान्ते .......... पिबेत्।

(ग) निशान्ते .......... पिबेत्।

२. पाठम् आधृत्य एकवाक्येन उत्तरयत

(क) कस्य ग्रहणेन शरीरस्य पोषणं भवति ?

(ख) पुष्टे शरीरे किं तुष्टं भवति ?

(ग) केन मस्तिष्कं सम्यक् कार्यं करोति ?

(घ) कदा उचितः आहारः ग्रहणीयः ?

(ङ) केषां तीक्ष्णाः नखाः दन्ताः च भवन्ति ?

(च) गावः, महिषाः, घोरकाः च कीदृशाः प्राणिनः सन्ति ?

(छ) के मांसाहारिणः प्राणिनः सन्ति ?

(ज) मनुष्यः कीदृशः प्राणी अस्ति ?

(झ) जीवने कदा अनुशासनं पालनीयम् ?

३. "भोजनान्ते पिबेत्तक्रम्" इति पद्यं पूरयित्वा पद्यस्य सरलार्थं लिखत।

४. अधस्तनपदैः निर्मितानि वाक्यानि पाठाद् अन्विष्य लिखत

विषसमानम्, निषेधति, किञ्चित्, प्रातःकाले, रात्रौ, तक्रपानाय, पर्याप्तम्, हितकरम्।

५. पाठाधारेण कोष्ठकात् समुचितं पदम् आदाय रिक्तस्थानं पूरयत

(क) व्याघ्रः ........ पशुः अस्ति। (शाकाहारी, मांसाहारी)

(ख) जलपानं ........ उत्तमं भवति। (प्रातः, भोजनकाले)

(ग) नियमस्य अपालनम् ........ भवति। (उचितम्, अनुचितम्)

(घ) मनुष्यः सदा ........ कुर्यात्। (शाकाहारम्, मांसाहारम्)

(ङ) बुभुक्षितः ........ प्राप्य प्रसीदति। (प्रशंसाम्, भोजनम्)

६. सरलैः वाक्यैः पाठस्य सारांशं लिखत।

७. विपर्ययपदानि परस्परं मेलयत

| समूहः "क" | समूहः "ख" |
|---|---|
| खाद्यम् | उत्तरम् |
| उचितः | असमर्थः |
| शाकाहारः | अखाद्यम् |
| प्रश्नः | अनुचितः |
| समर्थः | मांसाहारः |
| स्वस्थकरः | हानिकरः |
| लाभकर | रोगकरः |

९. स्वास्थ्यस्य दृष्ट्या खाद्यम् अखाद्यं च पृथक्कृत्य तालिकायां स्थापयत

सेवम्, अम्लं दधि, तक्रम्, गोदुग्धम्, पयोहिमम्, दुग्धम् अन्नम्, अर्धपक्वा रोटिका, आपणस्य मिष्टान्नम्, आमलकम्, तैलभर्जितम् आलुकम्, सुपक्वं फलम्।

| खाद्यम् | अखाद्यम् |
|---|---|
| सेवम्, .......... | अम्लं दधि, .......... |

## व्याकरणानुशीलनम्

१. भविष्यत्कालस्य क्रियापदानि पठत

| एकवचनम् | द्विवचनम् | बहुवचनम् | |
|---|---|---|---|
| पठिष्यति | पठिष्यतः | पठिष्यन्ति | प्रथमः पुरुषः |
| पठिष्यसि | पठिष्यथः | पठिष्यथ | द्वितीयः पुरुषः |
| पठिष्यामि | पठिष्यावः | पठिष्यामः | तृतीयः पुरुषः |

| वर्तमानकालः | भविष्यत्कालः |
|---|---|
| पठति | पठिष्यति |
| पठतः | पठिष्यतः |
| पठन्ति | पठिष्यन्ति |
| पठसि | पठिष्यसि |
| पठथः | पठिष्यथः |
| पठथ | पठिष्यथ |
| पठामि | पठिष्यामि |
| पठावः | पठिष्यावः |
| पठामः | पठिष्यामः |

२. भविष्यत्कालस्य अधस्तनक्रियापदानां सारिणीं लिखत

गमिष्यति, भविष्यति, चरिष्यति, हरिष्यति, लेखिष्यति

३. अधस्तनानाक्रियापदानां भविष्यत्काले रूपाणि लिखत

| | |
|---|---|
| वदति | वदिष्यति |
| भवसि | .......... |
| चलामि | .......... |
| रक्षन्ति | .......... |
| त्यजामः | .......... |

४. नियमम् उदाहरणं च दृष्ट्वा सन्धिं कुरुत

नियमः

(अ) .........म् + स्वरवर्णः = म्

(आ) .........म् + व्यञ्जनवर्णः = अनुस्वारः ( ं)

यथा — भवनम् + अस्ति = भवनमस्ति ।

कार्यम् + भवति = कार्यं भवति ।

(क) पुस्तकम् + अस्ति = ..............................

(ख) मातरम् + वन्दे = ..............................

(ग) भ्रातरम् + रक्षामि = ..............................

(घ) पितरम् + नमामि = ..............................

(ङ) ज्ञानम् + आवश्यकम् = ..............................

## रचनात्मकः अभ्यासः

१. उदाहरणानुसारेण रिक्तस्थानपूरणेन वाक्यानि रचयत

उदाहरणम्— अजा .......... खादति। (घास)

अजा घासं खादति।

(क) शिशुः .......... पिबति। (दुग्ध)

(ख) यात्रिकः .......... गच्छति। (विदेश)

(ग) पर्यटकः .......... पश्यति। (हिमालय)

(घ) गायिका .......... गायति। (गीत)

(ङ) माता .......... रचयति। (भोजन)

२. मञ्जूषायाः सहयोगेन चित्रस्य वर्णनात्मकानि वाक्यानि पूरयत

**मञ्जूषा**

| |
|---|
| सन्ति, आम्रवृक्षः, ते, पक्वानि, प्रसन्नाः |

(क) चित्रे विशालः ........... अस्ति।

(ख) वृक्षे आम्राणि ...........।

(ग) बालाः ........... आम्राणि चिन्वन्ति।

(घ) ........... आम्राणि खादन्ति।

(ङ) बालाः ........... भवन्ति।



चतुर्थः पाठः

# जलं जीवनम्

## पाठप्रवेशः गोदावरीभ्रमणम्



सनुजाशाक्यः ललितपुरे वसति। सा तत्र चतुर्थ्यां कक्षायां पठति।

अद्य विद्यालये अवकाशः वर्तते। अवकाशस्य दिवसे सनुजायाः सखायः यदा कदा सुन्दरं स्थलं द्रष्टुं भ्रमितुं च गच्छन्ति। अभिभावकाः एव तान् तत् कर्तुं प्रेरयन्ति। सखिनां भ्रमणवार्तां श्रुत्वा सनुजा आनन्दम् अनुभवति। तस्याः हृदि अपि वारं वारं भ्रमणस्य इच्छा जागर्ति। एकदा सनुजा स्वस्य इच्छां मातरम् अकथयत्। माता अवदत्, "भ्रमणाय गोदावरीस्थितम् उद्यानं गच्छसि ?" सनुजा झटिति प्रत्यवदत्, "गच्छामि मातः ! शीघ्रं सज्जीभवामि।" ते आदिवसं गोदावरीस्थितम् उद्यानम् अभ्रमताम्। ते हरिद्वनम्, मनोहारीणि पुष्पाणि, मन्देन तरङ्गेण विराजमानां पुष्करिणीं च अवालोकयताम्। तानि सर्वाणि विलोक्य सनुजायाः मनः नितराम् अमोदत।

सनुजा पुष्करिण्याः निर्मलं जलं स्प्रष्टुम् ऐच्छत्। सा एतद् मातरम् अवदत्। माता अनुमतिम् अदात्। पुष्करिणीं प्रवेष्टुं ततः निष्क्रान्तुं च द्वे द्वारे आस्ताम्। प्रवेशद्वारे लिखितम् आसीत् — "स्नानम् वस्त्रप्रक्षालनं च पूर्णरूपेण निषिद्धम् अस्ति।"

निष्क्रमणद्वारे दीर्घवाक्येन एतत् सूचितम् आसीत् – "पुष्करिण्याम् अवकरक्षेपकः रूप्यकाणां दशसहस्रैः वर्षावधिकेन कारावासेन च दण्ड्यते।" तान् आदेशान् पठित्वा सनुजा इतोऽपि सावधाना अभवत्। सा क्षणमात्रं पुष्करिण्याः जलं स्पृष्ट्वा अचिराद् बहिः आगच्छत्। अपराह्णस्य चतुर्वादनम् अजायत। गृहाद् एव नीतं स्वल्पाहारं कृत्वा माता पुत्री च गृहं प्रत्यागच्छताम्।

सनुजा शाक्य ललितपुरमा बस्दछिन्। उनी मिठो बोलेर र अनुशासनको पालना गरेर साथीहरूलाई पनि सन्तुष्ट पार्दछिन्।

आज विद्यालयमा बिदा छ। बिदाका दिन सनुजाका साथीहरू कहिलेकाहीँ राम्रा ठाउँ हेर्न र घुम्न जान्छन्। अभिभावकहरू नै उनीहरूलाई त्यसो गर्न प्रेरित गर्दछन्। साथीहरूका घुमघामका कुरा सुनेर सनुजा आनन्दित हुन्छिन्। उनलाई पनि घुम्न मन लाग्छ। एक दिन सनुजाले आफ्नो इच्छा आमालाई भनिन्। आमाले भन्नुभयो– "घुम्नका लागि गोदावरी उद्यान जान्छ्यौ त ?" सनुजाले तुरुन्तै भनिन्, "जान्छु आमा ! चाँडै तयार हुन्छु।" दुवै जना दिनभरि गोदावरी उद्यान घुमे। उनीहरूले हरियो वन, मनोहर फूल र अलिअलि तरङ्ग निकालिरहेको पोखरी पनि हेरे। ती सबै हेरेर सनुजाको मन अत्यन्त प्रसन्न भयो। सनुजालाई पोखरीको सफा पानी छुन मन लाग्यो। उनले यो कुरा आमालाई भनिन्। आमाले अनुमति दिनुभयो। पोखरीभित्र पस्न र बाहिर निस्कन दुईओटा ढोका थिए। पस्ने ढोकामा लेखिएको थियो — "नुहाउन र लुगा धुन पूर्णरूपमा मनाही गरिएको छ।" बाहिर निस्किने ढोकामा लामो वाक्यमा यस्तो जानकारी दिइएको थियो — "पोखरीमा फोहोर फाल्नेलाई दश हजार रुपियाँ र एक वर्षको कारावास सजाय हुनेछ।" ती आदेश पढेर सनुजा अझ सावधान भइन्। उनी एकै छिन मात्र पोखरीको पानी छोएर तुरुन्त बाहिर आइहालिन्। दिउँसोको चार बज्यो। घरबाटै लगेको खाजा खाएर आमाछोरी घर फर्के।

**मूलपाठः** 

## जलं जीवनम्

| | |
|---|---|
| जयन्ती | घटम् ऊद्वा कुत्र गच्छसि, सरले ? |
| सरला | जलम् आनेतुं गच्छामि । |
| जयन्ती | अयि, जलं तु तव गृहस्य निकटे एव अस्ति ! तत्र कूपे किम् अभवत् ? (साश्चर्यम्) |
| सरला | कूपस्य जलं प्रदूषितं अस्ति । तद् इदानीम् अपेयं जातम् । |
| जयन्ती | निकटवर्ति जलं विहाय किमर्थं दूरं गच्छसि ? दुःखं न भवति ? |
| सरला | किञ्चिद् दुःखं तु भवति । समयः अपि लगति । स्वच्छं जलं पातुम् एतत् कर्तव्यम् एव । |
| जयन्ती | प्रदूषितजले कः दोषः ? |
| सरला | बहवः दोषाः सन्ति । किं किं वक्तव्यम् ? स्वास्थ्यविज्ञाने त्वं न अपठः ? |
| जयन्ती | सम्यक् अपठं परं सम्प्रति न स्मरामि । कथय तावत् । (किञ्चित् संस्मृत्य) |
| सरला | प्राणिषु रोगाः उद्भवन्ति । दुर्गन्धः प्रसरति । तादृशं जलं दृष्ट्वा मनः अपि खिन्नं भवति । |



जयन्ती	रासायनिकेन औषधेन जलं स्वच्छं न भवति, सरले ?

सरला	तद् न उचितं जयन्ति ! प्रकृत्या स्वच्छं जलम् एव हितकारकं भवति।

जयन्ती	कथम् ?

सरला	स्वयमेव स्वच्छं जलं शक्तिवर्धकं भवति। एतद् रोगान् निवारयति। पाचनशक्तिं वर्धयति। उष्णतां शमयति। सौन्दर्यं जनयति।

जयन्ती	(प्रसन्नाः सती) शोभनम्, अतीव शोभनम्। तव कथनं मह्यं रोचते। अन्यद् अपि श्रोतुम् इच्छामि, कथय।

सरला	जानासि, जलस्य अपरं नाम जीवनम् अपि वर्तते। वयं जलेन विना जीवितुं न शक्नुमः। सकलानां प्राणिनां वनस्पतीनां च अवस्था अपि एतादृशी एव भवति।

जयन्ती	(विस्मयेन) तर्हि पानाय सदैव स्वच्छं जलं प्रयोक्तव्यम् ?

सरला	न केवलं पानाय अपि तु स्नानाय, सिञ्चनाय, प्रक्षालनाय प्लवनाय च सदा स्वच्छं जलम् आवश्यकं भवति।

जयन्ती	सर्वे जलाशयाः स्वच्छाः स्थापनीयाः। एवं वक्तुम् इच्छसि, सरले ?

सरला	(शिरः चालयन्ती) आम्, तदेव वक्तुम् इच्छामि जयन्ति ! अस्माभिः न केवलं ग्रामस्य कूपाः धाराः एव परं सर्वत्र पुष्करिण्यः, निर्झरिण्यः, नद्यः, समुद्राश्च स्वच्छाः कर्तव्याः, संरक्षणीयाश्च।

जयन्ती	तेन बहवः लाभाः सम्भवेयुः, न हि सरले ?

सरला	नूनं भवन्ति। वयं दीर्घायुष्यं प्राप्नुमः। अस्माकं संसारः स्वस्थः भविष्यति। ततः किम् ?

| | |
|---|---|
| जयन्ती | घैँटो बोकेर कता हिँडेकी सरला ? |
| सरला | पानी लिन हिँडेकी। |
| जयन्ती | (अचम्म मानेर) अरे, पानी त तिम्रो घर नजिकै छ नि ! त्यहाँको कुवा के भयो ? |
| सरला | कुवाको पानी प्रदूषित छ। त्यो अहिले खान नहुने भएको छ। |
| जयन्ती | नजिकको पानी छोडेर किन टाढा जान्छ्यौ ? दुःख हुँदैन ? |
| सरला | अलिकति दुःख त हुन्छ। समय पनि लाग्छ। सफा पानी खान यति त गर्नै पर्‍यो नि ! |
| जयन्ती | प्रदूषित पानीमा के दोष हुन्छ र ? |
| सरला | थुप्रै दोष हुन्छन्। के के भन्नु ? स्वास्थ्यविज्ञानमा तिमीले पढिनौ ? |
| जयन्ती | (केही सम्झे झैँ गरेर) राम्ररी पढेकी थिएँ नि ! अहिले बिर्सिहालेँ। भनन त। |
| सरला | प्राणीहरूमा रोग पैदा हुन्छ। दुर्गन्ध फैलिन्छ। त्यस्तो पानी देखेर मन पनि खिन्न हुन्छ। |
| जयन्ती | रासायनिक औषधीले पानी सफा हुँदैन र सरला ? |
| सरला | त्यो ठिक होइन। प्राकृतिक रूपले स्वच्छ पानी नै हितकारक हुन्छ। |
| जयन्ती | कसरी ? |
| सरला | आफैँ स्वच्छ भएको पानी शक्तिवर्धक हुन्छ। यसले रोगहरू हटाउँछ। पाचनशक्ति बढाउँछ। गर्मी शान्त पार्दछ। सौन्दर्य पैदा गर्छ। |
| जयन्ती | राम्रो, अति राम्रो। तिम्रो भनाइ मलाई मन पर्‍यो। अरू पनि सुन्न चाहन्छु , भन। |
| सरला | थाहा छ, पानीको अर्को नाम जीवन पनि हो। यसको अर्थ हामी पानी विना बाँच्न सक्दैनौँ भन्ने हो। सम्पूर्ण प्राणी र वनस्पतिको अवस्था पनि यस्तै हो। |

| | |
|---|---|
| जयन्ती | (अचम्म माने भैँ गरेर) त्यसो भए पिउनका लागि सधैँ स्वच्छ पानी प्रयोग गर्नुपर्छ ? |
| सरला | पिउनका लागि मात्र होइन, नुहाउन, सिँचाइ गर्न, धोइपखाली गर्न र पौडिनका लागि पनि सधैँ सफा पानी आवश्यक हुन्छ। |
| जयन्ती | त्यसो भए त सबै जलाशय स्वच्छ राख्नुपर्छ। यही भन्न खोजेकी हौ सरला ? |
| सरला | (टाउको हल्लाउँदै) हो, त्यसै भन्न खोजेकी हुँ जयन्ती ! हामीले गाउँका कुवा र धारा मात्र होइन सबैतिरका पोखरी, भरना, नदीनाला र समुद्र पनि स्वच्छ राख्नुपर्छ र संरक्षण गर्नुपर्छ। |
| जयन्ती | त्यसबाट धेरै फाइदा हुन्छ होला, होइन त सरला ? |
| सरला | अवश्य हुन्छ । हामीलाई दीर्घायु प्राप्त हुन्छ। हाम्रो संसार स्वस्थ हुने छ। त्यसभन्दा बढी के चाहियो ? |

## शब्दार्थः

| मूलशब्दः | संस्कृते पर्यायः | नेपाल्याम् अर्थः | आङ्गलभाषायाम् अर्थ |
|---|---|---|---|
| निकटे | समीपे | नजिकै | Near |
| शोभनम् | सुन्दरम् | राम्रो | Nice |
| सन्तोषयति | सन्तोषं जनयति | सन्तुष्ट पार्छ | Satisfies |
| मनुते | स्वीकरोति | मान्दछ | Accepts |
| यदा कदा | कदाचित् | कहिलेकाहीँ | Sometimes |
| द्रष्टुम् | विलोकयितुम् | हेर्न | To see |
| हृदि | मनसि | मनमा | In the mind |
| जागर्ति | उद्भवति | पैदा हुन्छ | Generates |

| | | | |
|---|---|---|---|
| झटिति | शीघ्रम् | चाँडै | Fast |
| प्रत्यवदत् | उदतरत् | उत्तर दियो | Answered to |
| आदिवसम् | पूर्णदिनम् | दिनभर | Whole day |
| विराजमाना | स्थिता (स्त्री) | रहेको | Located |
| अमोदत | हर्षम् अन्वभवत् | खुसी भयो | Became happy |
| स्प्रष्टुम् | स्पर्शनम् कर्तुम् | छुन | To touch |
| प्रवेशद्वारे | अन्तर्गमनकपाटे | भित्र पस्ने ढोकामा | In the Entrygate |
| वस्त्रप्रक्षालनम् | परिधानस्वच्छीकरणम् | लुगा धुने काम | Washing clothes |
| निष्क्रमणद्वारे | बहिः आगमनकपाटे | बाहिर निस्किने ढोकामा | In the exit gate |
| अवकरक्षेपकः | दूषितपदार्थत्यागी | फोहोर फाल्ने | Who throws dirts down |
| सावधाना | सचेष्टा (स्त्री.) | सतर्क | Careful |
| क्षणमात्रम् | ईषत्कालपर्यन्तम् | एकै छिन | For a short time |
| स्पृष्ट्वा | स्पर्शनम् कृत्वा | छोएर | After touching |
| अचिराद् | शीघ्रम् | छिट्टै | Quickly |
| स्वल्पाहारः | जलपानम् | खाजा | Tiffin |
| प्रत्यागच्छताम् | प्रत्यावर्तेताम् | (दुई जना) फर्किए | Returned to |

| | | | |
|---|---|---|---|
| ऊढ्वा | गृहीत्वा | लिएर | Taking with |
| कूपे | वापिकायाम् | कुवामा | In the well |
| अपेयम् | पानाय अयोग्यम् | पिउन नहुने | Not drinkable |
| पातुम् | पानं कर्तुम् | पिउन | To drink |
| उद्भवन्ति | जायन्ते | पैदा हुन्छन् | Come to existence |
| निवारयति | अपाकरोति | हटाउँछ | Eradicates |
| शमयति | शान्तिं प्रापयति | शान्त बनाउँछ | Makes cooldown |
| तर्हि | तथा सति | त्यसो भए | If so |
| प्लवनाय | जलक्रीडनाय | पौडिन | For swimming |
| आम् | स्वीकृतम् | अँ | Yes, Ok |
| निर्झरिण्यः | जलप्रपाताः | झरनाहरू | Waterfalls |
| नूनम् | अवश्यम् | अवश्य नै | Certainly |

## अभ्यासः

### श्रवणम् भाषणं च

१. शिक्षकात् श्रुत्वा शुद्धम् उच्चारयत

द्रष्टुम्, प्रत्यवदत्, स्प्रष्टुम्, स्पृष्ट्वा, ऊढ्वा, तर्हि, प्लवनाय ।

२. सर्वेषु पदेषु प्रयुक्तौ द्वौ समानवर्णौ वदत

द्वाराणि, मनोहारीणि, पुष्करिणी, निर्झरिणी ।

३. द्वाभ्यां मित्राभ्यां पाठस्य संवादं श्रुत्वा सामूहिकम् उच्चारणं कुरुत

निष्क्रमणद्वारे, अवकरक्षेपकः, क्षणमात्रम्, प्रत्यागच्छताम्, उद्भवन्ति, निर्झरिण्यः।

४. एकवाक्येन उत्तरं कथयत

(क) सरला किम् आनेतुं गच्छति ?

(ख) कूपस्य जलं कीदृशम् अस्ति ?

(ग) केन दुर्गन्धः प्रसरति ?

(घ) स्वच्छं जलं कान् निवारयति ?

(ङ) स्वच्छेन जलेन वयं किं प्राप्नुमः ?

५. उचितवाक्ये 'समीचीनम्', अनुचितवाक्ये 'असमीचीनं' इति वदत

(क) गोदावरीस्थितम् उद्यानं सुन्दरम् अस्ति।

(ख) पुष्पाणि मनोहारीणि न भवन्ति।

(ग) माता सनुजायै अनुमतिम् अदात्।

(घ) पुष्करिणी प्रदूषिता आसीत्।

(ङ) प्रदूषितं जलं रोगस्य कारणं भवति।

(च) पानाय एव जलं स्वच्छं कर्तव्यम्।

(छ) पुष्करिण्याम् अवकरक्षेपकः पुरस्कारं लभते।

(ज) वयं सदैव स्वच्छं जलं पिबामः।

६. अनुच्छेदं श्रुत्वा उत्तरं निगदत

सनुजा पुष्करिण्याः निर्मलं जलं स्प्रष्टुम् ऐच्छत्। सा एतद् मातरम् अवदत्। माता अनुमतिम् अदात्। पुष्करिणीं प्रवेष्टुं ततः निष्क्रान्तुं च द्वे द्वारे आस्ताम्। प्रवेशद्वारे लिखितम् आसीत्– "स्नानं वस्त्रप्रक्षालनं च पूर्णरूपेण निषिद्धम् अस्ति।" निष्क्रमणद्वारे दीर्घवाक्येन एतत् सूचितम् आसीत् – "पुष्करिण्याम् अवकरक्षेपकः रूप्यकाणां दशसहस्रैः वर्षावधिकेन कारावासेन च दण्ड्यते।" तान्

आदेशान् पठित्वा सनुजा इतोऽपि सावधाना अभवत्। सा क्षणमात्रं पुष्करिण्याः जलं स्पृष्ट्वा अचिराद् बहिः आगच्छत्। अपराह्णस्य चतुर्वादनम् अजायत। गृहाद् एव नीतं स्वल्पाहारं कृत्वा माता पुत्री च गृहं प्रत्यागच्छताम्।

प्रश्नाः

(क) "निर्मलम्" कस्य पदस्य विशेषणम् अस्ति ?

(ख) प्रवेशद्वारे किं लिखितम् अस्ति ?

(ग) दीर्घवाक्यं कुत्र अस्ति ?

(घ) का आदेशान् अपठत् ?

(ङ) गृहात् कः नीतः आसीत् ?

(च) पदानि संयोज्य समस्तपदम् उच्चारयत

प्रति + आ + गच्छताम्

## ७. सचित्रं संवादं श्रुत्वा उचितपदं प्रयुज्य उत्तरम् वदत

अहं पाठयामि आवां पाठयावः वयं पाठयामः

अहं पठामि आवां पठावः वयं पठामः

शिक्षकः वदति – अहं पाठयामि।

शिक्षकौ वदतः – आवां पाठयावः।

शिक्षकाः वदन्ति– वयं पाठयामः।

विद्यार्थी वदति– अहं पठामि।

विद्यार्थिनौ वदतः – आवां पठावः।

विद्यार्थिनः वदन्ति– वयं पठामः।

अहं त्वां पाठयामि।

अहं युवां पाठयामि।

अहं युष्मान् पाठयामि।

त्वं मां पाठयसि।

युवां मां पाठयथः ।

यूयं मां पाठयथ ।

युवां आवां पाठयथः ।

यूयं अस्मान् पाठयथ ।

प्रश्नाः

**(क)** शिक्षकः वदति, “अहं ......।”

(ख) विद्यार्थी वदति, “.......पठामि ।”

(ग) शिक्षकाः वदन्ति, “वयं ...... ।”

(घ) ..... वदतः, “आवां पठावः ।”

(ङ) ..... युवां पाठयामि ।

(च) त्वं मां ..... ।

(छ)..... अस्मान् पाठयथ ।

(ज) युवाम् आवां ...... ।

(झ) शिक्षकः पाठयति, ...... पठन्ति ।

(ञ) ......पाठयतः, विद्यार्थिनौ ...... ।

८. शिक्षकात् पाठस्य सारांशं श्रुत्वा स्वमातृभाषायां पुनः कथयत ।

## पठनम्

१. अनुच्छेदं पठित्वा सखिभिः सह विमृशत

पयुर्षितं भोजनं स्वास्थ्यकरं न भवति । विगलितं फलं विपत्तिकरं भवति । म्लानं व्यञ्जनं शरीरे अशान्तिम् आमन्त्रयति । पर्युषितं दुग्धम् अपि हितं न साधयति । एतत् सर्वे जानन्ति तथापि कानिचन वस्तूनि कदापि पर्युषितानि न भवन्ति । अयम् आश्चर्यस्य विषयः वर्तते । यथा – तुलसीपत्रं कदापि पर्युषितं न भवति । एतत् सर्वदा पवित्रं मन्यते । गङ्गाजलम् अपि पर्युषितं न भवति । गङ्गाजलं दूषितं च न जायते । कुशम् अपि सदैव शुद्धं भवति ।

कुशधारणेन शिरसः केशाः असमये न निपतन्ति इति वैज्ञानिकाः अपि वदन्ति। कुशं हृदयाघातं च दूरीकरोति। एतेषां प्रयोगेण सेवनेन च अस्माकं मङ्गलं भवति। प्रकृतौ अद्भुता शक्तिः अस्ति। इदं सत्यम् अस्माभिः न विस्मर्तव्यम्।

बासी खानेकुरा स्वास्थ्यकर हुँदैन। कुहेको फल हानिकारक हुन्छ। वैलिएको तरकारीले शरीरमा अशान्ति निम्त्याउँछ। बासी दुधले पनि हित गर्दैन। यो कुरा सबैले जानेका छन् तापनि कुनै कुनै वस्तु कहिले पनि बासी हुँदैनन्। यो आश्चर्यको कुरा हो, जस्तै : तुलसीपत्ता कहिले पनि बासी हुँदैन। यो सधैँ पवित्र मानिन्छ। गङ्गाजल पनि बासी हुँदैन। गङ्गाजल दूषित पनि हुँदैन। कुश पनि सधैँ शुद्ध हुन्छ। कुश धारण गर्नाले कपाल असमयमै झर्दैनन् भन्ने कुरा वैज्ञानिकहरूले पनि गरेका छन्। कुशले हृदयाघातलाई पनि भगाउँछ। यिनको प्रयोग र सेवनले हाम्रो कल्याण हुन्छ। प्रकृतिमा अद्भुत शक्ति छ। हामीले यो सत्य बिर्सिनु हुँदैन।

२. अनुच्छेदं पठित्वा प्रश्नान् उत्तरयत



बहवः जनाः तैलमर्दनं कुर्वन्ति। तैलमर्दनेन कः लाभः भवति ? अत्र विचारयामः। तैलमर्दनेन वृद्धत्वं न्यूनं भवति। शैथिल्यं स्वयं शिथिलायते। वातरोगः नश्यति। दृष्टिशक्तिः वर्धते। शरीरं पुष्टं जायते। आयुष्यम् एधते। निद्रा आयाति। त्वक् सुन्दरं बलिष्ठं च भवति। तेजोवृद्धिः च भवति। आयुर्वेदे घृतस्य तैलस्य च

विषये चर्चितम् अस्ति। तैले घृताद् अष्टाभिः गुणनैः अधिका शक्तिः भवति। इयं शक्तिः मर्दने एव वर्तते। भक्षणे तु घृतमेव अधिकं शक्तिमत् अस्ति। मर्दने सर्षपस्य तैलमेव प्रयोक्तव्यम्। एतदेव सर्वाधिकं लाभप्रदं भवति।

प्रश्नाः

(क) जनाः किं कुर्वन्ति ?

(ख) किं स्वयं शिथिलायते ?

(ग) वातरोगः केन नश्यति ?

(घ) तैलमर्दनेन त्वक् कीदृशं भवति ?

(ङ) मर्दने कस्य शक्तिः अधिका अस्ति ?

(च) भक्षणे अधिकं शक्तिदायकं किम् ?

(छ) मर्दने कस्य तैलं प्रयोक्तव्यम् ?

(ज) घृतस्य तैलस्य च विषये कुत्र चर्चितम् अस्ति ?

धेरै मानिस तेल मालिस गर्दछन्। तेल मालिस गर्नाले के फाइदा हुन्छ ? यसबारे विचार गरौँ। तेल मालिस गर्नाले बुढ्यौली घट्छ। थकाइ आफैँ थकित हुन्छ। वाथरोग नाश हुन्छ। आँखाको शक्ति बढ्छ। शरीर पुष्ट हुन्छ। आयु बढ्छ। निद्रा लाग्छ। छाला राम्रो र बलियो हुन्छ। तेज पनि बढ्छ। आयुर्वेदमा घिउ र तेलका विषयमा चर्चा गरिएको छ। तेलमा घिउको भन्दा आठ गुणा बढी शक्ति हुन्छ। यस्तो शक्ति मालिसमा मात्र हुन्छ। खानका लागि त घिउ नै बढी शक्तिशाली हुन्छ। मालिसका लागि सर्स्युँको तेल नै प्रयोग गर्नुपर्दछ। यो नै सबैभन्दा फाइदाजनक हुन्छ।

३. प्रश्नानां क्रमानुसारेण उत्तरदायकान् अनुच्छेदान् पठत

(क) सङ्गीतकारः काभ्यां मृदङ्गं वादयति ?

(ख) केन व्रतेन दाम्पत्यजीवनं सुखदं भवति ?

(ग) बालिकाः कैः माल्यानि ग्रथ्नन्ति ?

(घ) कृषकः केन क्षेत्रं कर्षति ?

(ङ) तैलेन किं चलति ?

(च) शतेन रूप्यकैः कः किं करोति ?

मिथिलाक्षेत्रे मधुश्रावणीव्रतं विधीयते । नवविवाहिताः महिलाः एतद् व्रतम् आचरन्ति । ताः अनेन व्रतेन दाम्पत्यजीवनं सुखदं भवति इति विश्वसन्ति । इयम् मिथिलासंस्कृतिः वर्तते ।

कृषकः परिश्रमं करोति । स हलेन क्षेत्रं कर्षति । स अन्नम् उत्पादयति । तेन अस्माकं जीवनं चलति ।

भारवाहकः आदिवसं भारं वहति । स भारम् ऊढ्वा इतस्ततः गच्छति । तेन सह अधिकं धनं नास्ति । स शतेन रूप्यकैः वस्त्रं क्रीणाति ।

सङ्गीतकारः गीतं गायति । तस्य पार्श्वे मृदङ्गः वर्तते । स हस्ताभ्यां मृदङ्गं वादयति । मृदङ्गस्य ध्वनिः मधुरः भवति ।

बालिकाः उद्यानं गच्छन्ति । ताः पुष्पाणि चिन्वन्ति । ताः पुष्पैः माल्यानि ग्रथ्नन्ति । माल्यानि मनः आकर्षयन्ति ।







यानं तैलेन चलति । चालकः यानं चालयति । जनाः यानम् आरोहन्ति । यानं द्रुतगत्या गन्तव्यं प्रापयति ।

मिथिला क्षेत्रमा मधुश्रावणीव्रत गरिन्छ । नवविवाहित महिला यो व्रत गर्दछन् । उनीहरू यस व्रतबाट दाम्पत्यजीवन सुखद हुन्छ भन्ने विश्वास गर्दछन् । यो मिथिला संस्कृति हो ।

किसान परिश्रम गर्दछ। ऊ हलोले खेतबारी जोत्छ। ऊ अन्न उत्पादन गर्दछ। त्यसबाट हाम्रो जीवन चल्छ।

भरिया दिनभरि भारी बोक्छ। ऊ भारी बोकेर यताउति हिँड्छ। ऊसँग धेरै धन छैन। ऊ सय रूपियाँले लुगा किन्छ।

सङ्गीतकार गीत गाउँछ। ऊसँग मादल छ। ऊ दुई हातले मादल बजाउँछ। मादलको ध्वनि मिठो हुन्छ।

बालिकाहरू बगैँचामा जान्छन्। उनीहरू फूल टिप्छन्। उनीहरू फूलबाट माला उन्छन्। मालाले मन आकर्षित गर्दछन्।

गाडी तेलले चल्छ। चालकले गाडी चलाउँछ। मानिसहरू गाडी चढ्छन्। गाडीले छिट्टै गन्तव्यमा पुऱ्याइदिन्छ।

## ४. कोष्ठकात् उचितपदं विचित्य पूर्णवाक्यं पठत

(क) ... जलं जीवनम् अस्ति। (स्वच्छम्/दूषितम्/पर्युषितम्)

(ख) जलस्य अपरं नाम ... वर्तते। (उष्णता/मन्दता/जीवनम्)

(ग) तैल... लाभदायकं भवति। (स्पर्शनम्/नमनम्/मर्दनम्)

(घ) नायकः ... करोति। (अभिनयम्/भारवहनम्/मधुश्रावणीव्रतम्)

(ङ) ... अस्मान् पाठयन्ति। (बालिकाः/नायिकाः/शिक्षकाः)

## ५. उचितलेख्यचिह्नानि पूरयित्वा सस्वरपठनं कुरुत

अनुजः प्रसन्न वर्तते ... स अद्य शैक्षिकभ्रमणाय गच्छति ... पिता पृच्छति ... किं खादसि ... माता सखिनां विषये वदति ... अनुज उत्तरयति ... भोजनं खादामि मात ... सखायः शोभनाः सन्ति ... बसयानं आगच्छति ... ध्वनिसूचनं करोति ... अनुजः वदति ... इह गच्छामि ... माता पुनः वदति ... सायं शीघ्रम् आगच्छ पुत्र ... बसयानात् सखायः वदन्ति ... अभिवादनम् अनुज ... अनुजः अपि प्रतिवदति ... अभिवादनं सखायः अभिवादनम् ...

अनुज खुसी छ। ऊ आज शैक्षिकभ्रमणमा जान्छ। बुबा सोध्नुहुन्छ, "के खान्छौ ?" आमा साथीका बारेमा भन्नुहुन्छ। अनुज जबाफ दिन्छ, "खाना खान्छु। आमा ! साथीहरू असल छन्।" बस आउँछ। हर्न बजाउँछ। अनुज भन्छ, "अब जान्छु।" आमा फेरि भन्नुहुन्छ, "बेलुका चाँडै आऊ है छोरा !" बसबाट साथीहरू भन्छन्, "अभिवादन अनुज !" अनुज पनि जबाफ फर्काउँछ, "अभिवादन साथी हो ! अभिवादन !"

६. रूपावल्याः अनुसारेण रिक्तस्थानस्य रूपं पठत

"अस्मद्" शब्दः

| विभक्तिः | कारकम् | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|---|
| प्रथमा | कर्ता | अहम् | आवाम् | वयम् |
| द्वितीया | कर्म | माम् | आवाम् | अस्मान् |
| | | मा | नौ | नः |
| तृतीया | करणम् | मया | आवाभ्याम् | अस्माभिः |
| चतुर्थी | सम्प्रदानम् | मह्यम् | आवाभ्याम् | अस्मभ्यम् |
| | | मे | नौ | नः |
| पञ्चमी | अपादानम् | मत् | आवाभ्याम् | अस्मत् |
| षष्ठी | (सम्बन्धः) | मम | आवयोः | अस्माकम् |
| | | मे | नौ | नः |
| सप्तमी | अधिकरणम् | मयि | आवयोः | अस्मासु |

"युष्मद्" शब्दः

| विभक्तिः | कारकम् | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|---|
| प्रथमा | कर्ता | त्वम् | युवाम् | यूयम् |

| | | | | |
|---|---|---|---|---|
| द्वितीया | कर्म | त्वाम् | युवाम् | युष्मान् |
| | | त्वा | वाम् | वः |
| तृतीया | करणम् | त्वया | युवाभ्याम् | युष्माभिः |
| चतुर्थी | सम्प्रदानम् | तुभ्यम् | युवाभ्याम् | युष्मभ्यम् |
| | | ते | वाम् | वः |
| पञ्चमी | अपादानम् | त्वत् | युवाभ्याम् | युष्मत् |
| षष्ठी | (सम्बन्धः) | तव | युवयोः | युष्माकम् |
| | | ते | वाम् | वः |
| सप्तमी | अधिकरणम् | त्वयि | युवयोः | युष्मासु |

प्रश्नाः

(क) "अस्मद्" शब्दस्य द्वितीयाविभक्तेः बहुवचनम् ..........

(ख) "युष्मद्" शब्दस्य करणकारकस्य एकवचनम् ...........

(ग) "अस्मद्" शब्दस्य पञ्चमीविभक्तेः बहुवचनम् ........

(घ) "युष्मद्" शब्दस्य चतुर्थीविभक्तेः द्विवचनम् .........

(ङ) "अस्मद्" शब्दस्य अधिकरणकारकस्य बहुवचनम् ........

(च) "युष्मद्" शब्दस्य पञ्चमीविभक्तेः एकवचनम् ........

(छ) " अस्मद्" शब्दस्य षष्ठीविभक्तेः द्विवचनम् ..........

७. कालक्रमं सम्मेल्य द्रुतपठनं कुरुत

नेपाले २००७ तमे विक्रमवर्षे प्रजातन्त्रस्य स्थापनम् अभवत्। २०४६/२०४७ तमयोः वर्षयोः जनान्दोलनं विहितम् आसीत्। २०३७ तमे वर्षे जनमतसङ्ग्रहः सम्पन्नः आसीत्। १८२५ तमे वर्षे पृथ्वीनारायणः काष्ठमण्डपम् अजयत्। २०१५ तमे वर्षे प्रथमवारं संसदीयनिर्वाचनं सम्पादितम् आसीत्। १९०३ तमे वर्षे राणाशासनं प्रारब्धम् आसीत्। अहम् २०८४ तमस्य वर्षस्य माध्यमिकशिक्षापरीक्षायाम् उत्तीर्णः

भविष्यामि। संविधानसभया निर्मितं संविधानम् २०७२ तमे वर्षे सार्वजनिकम् अभवत्। आदिकविः भानुभक्तः १८७१ तमे वर्षे जन्म अलभत। २०५८ तमे वर्षे राजप्रासादे महती दुर्घटना घटिता आसीत्। २०७७ तमाद् वैक्रमाब्दात् कोरोनाविषाणोः सङ्क्रमणं प्रासरत्।

## लेखनम्

१. पदानि लिखत

प्रवेशद्वारम्, निष्क्रमणम्, द्वितीया, पर्युषितम्, हृदयाघातः, प्रदूषणम्, वृद्धत्वम्, समुद्रः, सङ्ग्रहः।

२. वाक्येषु प्रयोगं कुरुत

अपेयम्, शमयति, आम्, विचारयामः, अभिवादनम्, माता, संविधानम्।

३. "गोदावरीभ्रमणम्" इति पाठस्य अन्तिमानुच्छेदस्य अनुलेखनं कुरुत।

४. कारकविभक्त्योः मेलनं दर्शयत

| कारकम् | विभक्तिः |
|---|---|
| कर्म | तृतीया |
| अपादानम् | प्रथमा |
| कर्ता | चतुर्थी |
| करणम् | सप्तमी |
| सम्प्रदानम् | पञ्चमी |
| अधिकरणम् | द्वितीया |

५ "अस्मद्–युष्मद्" शब्दयोः समानवचनस्य रूपाणि लिखत

यथा– मयि = त्वयि

माम् = .... , ते = ...., यूयम् = ..., आवयोः = ...., युष्मत् = ...., नः = ...., त्वया =...., अस्मभ्यम् = ...., वाम् = ...., मह्यम् = ...., युष्मान् = ...., अस्माकम् = ...., त्वत् = ...., अहम् = ....।

## ६. द्वयोः एव समूहयोः वाक्यानि अनुलिखत

| "अ" समूहः | "आ" समूहः |
|---|---|
| (क) कमलं सुन्दरम् अस्ति। | (क) कमलं सुन्दरमस्ति। |
| (ख) भक्तः जगतः नाथं पूजयति। | (ख) भक्तो जगन्नाथं पूजयति। |
| (ग) शिक्षकः इति अपि अपाठयत्। | (ग) शिक्षक इत्यपि अपाठयत्। |
| (घ) हिमस्य अचलः शीतः भवति। | (घ) हिमाचलः शीतो भवति। |
| (ङ) अग्निः वनं दहति। | (ङ) अग्निर्वनं दहति। |
| (च) अहम् द्वयोः एव समूहयोः वाक्यानि लिखामि। | (च) अहं द्वयोरेव समूहयोर्वाक्यानि लिखामि। |
| (छ) द्वौ एव अपराधिनौ दण्डितौ स्तः। | (छ) द्वावेव अपराधिनौ दण्डितौ स्तः। |
| (ज) अयं कार्यालयस्य अधिकृतः अस्ति। | (ज) अयं कार्यालयस्याधिकृतोऽस्ति। |

## ७. रिक्तस्थाने कोष्ठकात् पर्यायवाचिशब्दम् लिखत

(क) आकाशः ... अस्ति। (गगनम्/नयनम्/वचनम्)

(ख पक्षिणः अपरं नाम... वर्तते। (हस्ती/अश्वः/खगः)

(ग) मानवः ...अपि कथ्यते। (शशकः/मनुष्यः/शार्दूलः)

(घ) घोटकस्य ...स्य च समानः अर्थः भवति। (शुक/अज/अश्व)

(ङ) तोयम् अपि ... एव बोधयति। (दुग्धम्/घृतम्/जलम्)

## ८. रिक्तस्थाने कोष्ठकाद् विचित्य सुभाषितानां नेपालिभाषायाम् अर्थं लिखत

**(क)** सत्यमेव जयते। ..................................

(ख) विद्वान् सर्वत्र पूज्यते। ..........................

(ग) विद्ययाऽमृतमश्नुते।

(घ) गुरुशुश्रूषया विद्या। .............................

(ङ) दिव्यं नेपालदेशं नौमि। ........................

(च) पूजनीया महाभागाः पुण्याश्च गृहदीप्तयः। ..............................

(छ) हस्तपादे मुखे चैव पञ्चार्द्रो भोजनं चरेत्।
पञ्चार्द्रकस्तु भुञ्जानः शतं वर्षाणि तिष्ठति॥ ................................

(ज) जननी जन्मभूमिश्च स्वर्गादपि गरीयसी। ................................

(झ) बालानां प्रार्थितं दत्वा नाकलोके महीयते। ..............................

(विद्वान्को सबैतिर पूजा हुन्छ । दिव्य नेपाल देशलाई नमस्कार गर्छु । बालबालिकाले मागेको कुरा दिने मानिस स्वर्गमा बस्न पाउँछ। गुरुको सेवाबाट विद्या पाइन्छ। महिला पूजनीय, माननीय र पवित्र हुन्छन्। यिनीहरू घरका बत्ती हुन्। जननी र जन्मभूमि स्वर्गभन्दा ठुला हुन्छन्। दुई हात, दुई खुट्टा र मुख — यी पाँचओटा अङ्ग धोएर मात्र भोजन गर्ने मानिस सय वर्ष बाँच्छ। विद्याबाट अमृत खान पाइन्छ।)

९. शुद्धरूपेण अनुलिखत

(क) तडागे कमलं विकसितं दृश्यते।

(ख) जनाः जले स्नान्ति।

(ग) जलं पेयम् अस्ति।

(घ) तडागं परितः मृगाः चरन्ति।

(ङ) वस्त्रप्रक्षालनेन तडागः स्वच्छः भवति।

(च) तडागः दर्शनीयः अस्ति।

(छ) बालबालिकासु स्वास्थ्यचेतना वर्तते।

(ज) तडागे स्नात्वा रोगाः अपसरन्ति।

(झ) घटे जलं भरन्त्यः महिलाः बुद्धिमत्यः सन्ति।

(ञ) अहम् अस्मिन् तडागे न स्नामि।

(ट) अहं तडागं स्वच्छं स्थापयितुं सहयोगं करोमि।

## व्याकरणानुशीलनम्

१. वर्णसम्मेलनस्य विधिं पठित्वा निर्दिष्टान् क्रियाकलापान् कुरुत

(क) अ/आ + इ/ई = ए

यथा– देव+इन्द्रः = देवेन्द्रः

राम + ईशः = रमेशः

महा + इन्द्रः = महेन्द्रः

महा + ईश्वरः = महेश्वरः

(ख) अ/आ + उ/ऊ = ओ

यथा– सूर्य + उदयः = सूर्योदयः

एक + ऊनः = एकोनः

महा + उदयः = महोदयः

महा + ऊर्मिः = महोर्मिः

(ग) अ/आ + ऋ = अर्

यथा– देव + ऋषिः = देवर्षिः

ब्रह्मा + ऋषिः = ब्रह्मर्षिः

(घ) अ/आ + लृ = अल्

यथा–तव + लृकारः = तवल्कारः

रमा + लृकारः = रमल्कारः

**क्रियाकलापाः**

(अ) वर्णान् मेलयित्वा शब्दान् लिखत

धन + इन्द्रः = ........

भव + ईशः = ........

कला + इन्द्रः = ......

विद्या + ईश्वरः = .....

(आ) उदाहरणानि दर्शयत

आ + उ = ओ – .......

अ + ऋ = अर्– .......

आ + ऋ = अर्– .....

अ + ऊ = ओ– .....

(इ) वर्णसम्मेलनस्य विधिं लिखत

तवल्कारः ..............

भूपेन्द्रः ...............

खगेश्वरः ...........

महोत्तमः ..........

राजर्षिः ............

उमेशः ...........

पुरुषोत्तमः .........

(ई) अधो लिखितम् अनुच्छेदं पठित्वा वर्णसम्मेलनेन निर्मितान् शब्दान् लिखत

देवेशः वैज्ञानिकः अस्ति । देवेशस्य बहूनि मित्राणि सन्ति । तेषु उपेन्द्रः अपि प्रियतरं मित्रं वर्तते । अनयोः अपरम् अपि मित्रम् अस्ति । तस्य नाम मिथिलेशः वर्तते । त्रीणि मित्राणि भ्रमणाय गच्छन्ति । त्रयः एव सखायः एकम् आश्रमं पश्यन्ति । ते आश्रमं गच्छन्ति । आश्रमे एकः वृद्धः वसति । ते तं नमन्ति । स त्रीन् जनान् तत्र आगमनस्य कारणं पृच्छति ।

सखायः सुमधुरैः वचनैः उत्तरं ददति। तेन प्रसन्नः वृद्धः वदति, “अहं पूर्वं राजर्षिः आसम्। भूतेशं प्रसन्नम् अकारयम्। इदानीम् एकाकी वसामि। अन्नं न खादामि। गङ्गोदकं पिबामि। सिद्धेश्वरं चिन्तयामि, विद्येश्वरं प्रीणयामि। नातिदूरे एकः ब्रह्मर्षिः तपश्चरति। तं सेवे। तत्र हिमालयात् प्रवहन्ती नदी अस्ति। तस्याः महोर्मिः मनः हरति। प्रतिदिनं तवल्कारं पठामि। सानन्दं जीवनं यापयन् अस्मि।” वृद्धस्य वार्तां श्रुत्वा त्रयः युवानः हर्षम् उपागच्छन्। ते सायं गृहं प्रत्यागच्छन्।

देव + ईशः =.....

उप + इन्द्रः =.....

मिथिला + ईशः =.....

राज + ऋषिः = .....

भूत + ईशः =.....

गङ्गा + उदकम् =.....

सिद्ध + ईश्वरः =.....

विद्या + ईश्वरः =.....

ब्रह्मा + ऋषिः =.....

महा + ऊर्मिः =.....

तव + ऌकारः =.....

## रचनात्मकः अभ्यासः

(क) जलाशयानां रक्षणाय किं कर्तुं शक्यते ? विमृश्य निष्कर्षं कक्षायां श्रावयत।

(ख) जलस्य स्रोतांसि कानि सन्ति ? तेषां नामानि विलिख्य चित्राणि च निर्माय कक्षायां प्रदर्शयत।

## श्रवणपाठः

"गुण"-शब्दः बहून् अर्थान् द्योतयति। केषाञ्चन जनानाम् चेतसि दया-दाक्षिण्य-तितिक्षा-परोपकारादिभावना विराजते। एतादृशः जनः गुणी निगद्यते। गुणैः मानवः प्रशस्यते। साहित्यकारः भवभूतिः गुणान् पूजास्थानम् वदति। दर्शनेऽपि गुणशब्दः बहुधा प्रयुज्यते। तत्र पदार्थभेदः गुणः कथ्यते। दर्शनेषु गुणसङ्ख्यायाः विषये मतैक्यम् नावलोक्यते। न्यायवैशेषिकदर्शने रूप-रस-गन्ध-स्पर्शादयः चतुर्विंशतिः गुणाः मन्यन्ते। मीमांसादर्शनम् अपि रूप-रस-गन्ध-शब्द-स्पर्शादीन् चतुर्विंशतिम् गुणान् परिगणयति। साङ्ख्यदर्शने सत्वरजस्तमोनामधेयानाम् त्रयाणाम् गुणानाम् विवेचना भवति। काव्यशास्त्रे माधुर्य-ओज-प्रसादाः त्रयः गुणाः प्रसिद्धाः सन्ति। व्याकरणशास्त्रे गुणस्य अन्यः एव अर्थः भवति। अत्र महर्षिणा पाणिनिना गुणशब्देन वर्णानाम् सन्धिप्रभेदः परिभाषितः वर्तते। एतदनुसारेण "अ-आ" वर्णाभ्याम् परेः "इ-ई" वर्णयोः सतोः "ए" भवति। "अ-आ" वर्णाभ्याम् परेः "उ-ऊ" वर्णयोः सतोः "ओ" जायते। "अ-आ" वर्णाभ्याम् पर"ऋ" वर्णे सति "अर्"। "लृ" च वर्णे सति "अल्" सम्पद्यते। व्याकरणम् सर्वेषाम् शास्त्राणाम् आधारः अस्ति। उक्तम् च- "मुखं व्याकरणं प्रोक्तम्।"

पञ्चमः पाठ

# निजकार्यम्

**पाठप्रवेशः** **निजकार्यम्**



शनिवासरस्य दिनम् आसीत् । मनोजः भ्रमणाय गन्तुम् ऐच्छत् । पिता तस्य इच्छां ज्ञातवान् । पितुः अपि अद्य अवकाशः आसीत् । अतः तौ पितापुत्रौ भ्रमणाय समीपस्थं तपोवनम् अगच्छताम् ।

नद्याः तटे सुन्दरं तपोवनम् आसीत् । तपोवने सुन्दरं उद्यानम् आसीत् । उद्याने सुन्दराणि पुष्पाणि विकसितानि आसन् । मधुराणि फलानि च फलितानि आसन् । गोशालायां बहवः गावः आसन् । तत्र एकं कुटीरम् आसीत् । कुटीरस्य प्राङ्गणे एकः ऋषिः कुशासने स्थितः आसीत् । पित्रा सह आगतं मनोजं दृष्ट्वा महर्षिः प्रसन्नः अभवत् । सः अवदत् – "बाल ! त्वं किमर्थम् अत्रागतः ?" मनोजः अवदत् – "अद्य शनिवासरः । विद्यालये अवकाशः अस्ति । अतः पित्रा सह भ्रमणाय आगतः अस्मि ।" मनोजस्य मधुरां वाणीं श्रुत्वा ऋषिः स्मितवान् । स अपृच्छत् – "जिज्ञासुः असि, किं ज्ञातुं वाञ्छसि ?" मनोजः अवदत् –"अत्र के निवसन्ति ?" ऋषिः स्मितेन मुखेन अवदत् – "अत्र तु सर्वे

परोपकारिणः सन्ति ।" तत् श्रुत्वा मनोजः विस्मितः अभवत् । सः अपृच्छत् – "ते कुत्र सन्ति ? अहं तु भवन्तम् एव पश्यामि ।" ऋषिः अवदत् – "बालक ! अत्र गावः सन्ति । फलानां वृक्षाः सन्ति । पुष्पाणि सन्ति । नदी अस्ति । अहम् एतैः सह निवसामि । एते सर्वे परोपकारिणः सन्ति ।" एतद् उक्त्वा ऋषिः मनोजाय मनोजस्य पित्रे च एकम् एकं फलम् अददात् । सः अवदत् – "वृक्षाः अस्माकं कृते फलानि ददति । ते स्वयं फलानि न खादन्ति । नद्यः अपि अस्माकं कृते वहन्ति । पुष्पाणि अपि अस्माकं कृते सुगन्धं प्रसारयन्ति । गावः अस्माकं कृते एव दुग्धं ददति । सर्वा प्रकृतिः अस्माकं कृते अस्ति । सृष्टिः मां प्रतिदिनं परोपकारं शिक्षयति ।" एतत् श्रुत्वा मनोजः पितुः मुखे अपश्यत् । मुनिः तम् उक्तवान् – "बालक ! त्वम् अपि परोपकारं कुरु । परोपकारेण एव मानवस्य जीवनं सार्थकं भवति ।"

मुनेः उपदेशं श्रुत्वा पिता प्रसन्नः अभवत् । पुत्रः अपि प्रसन्नः सन् गृहम् आगच्छत् ।

शनिवारको बिदामा मनोज बुबाको साथमा नजिकैको तपोवनमा घुम्न गए । नदीको किनारमा रहेको तपोपन सुन्दर थियो । बगैँचा, गोशाला एवम् कुटी भएको तपोवनमा मनोज रमाए । कुटीमा एक जना ऋषि बसेका थिए । मनोजलाई देखेर ऋषिले प्रश्न सोधे –"बाबु कहाँबाट आयौँ ?" मनोजले आफू आउनुको सम्पूर्ण कारण बताएपछि ऋषि प्रसन्न भए । ऋषिको अगाडि मनोजले प्रश्न गरे – "यहाँ को को बस्नुहुन्छ ?" ऋषिले भने – "यहाँ सबै परोपकारीहरू बस्छन् ।" यो सुनेर मनोजले सोधे "खै त तिनीहरू कहाँ बस्छन् ?" ऋषिले भने – "बाबु " हेर त यहाँ गाईहरू छन् ! फलफूलका रुख छन् । नदी छ । फूलहरू छन् । यिनीहरू सबै परोपकारी छन् ।" यति भनी एक एक ओटा फल दिँदै उनले भने – "यिनीहरू सबैले हामीलाई आवश्यक सामग्री दिन्छन् । त्यसरी दिँदा हामीसित केही अपेक्षा गर्दैनन् । त्यसैले यिनीहरूले हामीलाई सधैँ परोपकारको शिक्षा दिन्छन् ।" ऋषिको कुरा सुनेर मनोज प्रसन्न भए । उनले पनि परोपकार गर्नुपर्छ भन्ने बुझे ।

**मूलपाठः** 

# निजकार्यम्

वासुदेवः द्विवेदी शास्त्री

मा कुरु दर्पम्, मा कुरु गर्वम्
मा भव मानी, मानय सर्वम्।
मा भज दैन्यम्, मा भज शोकम्
मुदितमनाः भव मोदय लोकम्॥१॥

मा वद मिथ्या, मा वद व्यर्थम्
न चल कुमार्गे, न कुरु अनर्थम्।
पाहि अनाथम्, पालय दीनम्
लालय जननी–जनक–विहीनम्॥२॥

अनुजं पाठय, अनुजां पाठय
शिक्षय सुगुणम्, दुर्गुणं वारय।
कुरु उपकारम्, कुरु उद्धारम्
अपनय मारम्, त्यज अपकारम्॥३॥

मा पिब मादकवस्तु अपेयम्
मा भज दुर्व्यसनं परिहेयम्।
मा नय क्षणमपि व्यर्थं समयम्
कुरु सकलं निजकार्यं त्वरितम्॥४॥

१. कहिल्यै पनि घमण्ड नगर, द्वेष नगर, अभिमानी नबन, सबैलाई सम्मान गर, खिन्न नबन, चिन्ता नगर, आफू सधैँ खुसी होऊ र संसारलाई खुसी बनाऊ।

२. कहिल्यै पनि झुटो नबोल, अनावश्यक कुरा नगर, कुमार्गतिर प्रवृत्त नहोऊ, अनावश्यक काम नगर, अनाथ व्यक्तिको रक्षा गर, दुःखी व्यक्तिलाई पालनपोषण गर, आमाबुबा नहुने व्यक्तिलाई माया गर।

३. आफ्नो भाइलाई पढाऊ, बहिनीलाई पढाऊ, राम्रा कुराहरू सिकाऊ, खराब कुराहरूबाट टाढा राख, सबैको उपकार गर, अरूको भलाई हुने काम गर, हिंसा नगर र कसैलाई पनि तिरस्कार नगर।

४. मदिराजन्य पदार्थको सेवन नगर, खराब आचरण नगर, थोरै समय पनि अनावश्यक कार्यमा व्यतीत नगर र आफ्ना सम्पूर्ण कार्यहरू समयमै गर।

## प्रथमं पद्यम्

अन्वयः

दर्पम् मा कुरु, गर्वं मा कुरु मानी मा भव, सर्वं मानय, दैन्यम् मा भज, शोकं मा भज, मुदितमना भव, लोकं मोदय।

सरलार्थः

स्वस्य जीवने कदापि अभिमानं न कुरु, मान्यजनं प्रति सम्मानं कुरु, दीनभावम् अपसारय, शोकं मा कुरु, सदैव सुखी भूत्वा सर्वान् परितोषय।

## द्वितीयं पद्यम्

अन्वयः

मिथ्या मा वद, व्यर्थं मा वद, कुमार्गे न चल, अनर्थं न कुरु, अनाथं पाहि, दीनं पालय, जननी–जनक–विहीनं लालय।

सरलार्थः

कदापि मिथ्या भाषणं न कुरु, अनावश्यकं मा वद, सुमार्गे चल, सदैव असहायं, दीनं, जनकजननीरहितं जनं च लालय।

## तृतीयं पद्यम्

अन्वयः

अनुजं पाठय, अनुजां पाठय, सुगुणं शिक्षय, दुर्गुणं वारय, उपकारं कुरु, उद्धारं कुरु, मारम् अपनय, अपकारं त्यज ।

सरलार्थः

स्वस्य अनुजम् अनुजां च पाठय, तान् सदाचारं शिक्षय, दुराचारं निवारय, समेषाम् उपकारं कुरु, कदापि हिंसां अपकारं च मा कुरु ।

## चतुर्थं पद्यम्

अन्वयः

अपेयं मादकवस्तु मा पिब, परिहेयं दुर्व्यसनं मा भज, क्षणमपि समयं व्यर्थं मा नय, सकलं निजकार्यं त्वरितं कुरु ।

सरलार्थः

कदापि मादकवस्तु न पिब, दुराचारे संलग्नो मा भव, किञ्चित् कालम् अपि व्यर्थं मा कुरु, सम्पूर्णम् अपि स्वकार्यं समये एव सम्पादय ।

### शब्दार्थाः

| मूलशब्दः | संस्कृते पर्यायः | नेपाल्याम् अर्थः | आङ्ग्लभाषायाम् अर्थः |
|---|---|---|---|
| दर्पम् | मदम् | घमन्डलाई | Pride |
| गर्वम् | अभिमानम् | जिद्दीपनलाई | stubbornness |
| मानी | अभिमानी | मान खोज्ने | arrogant |
| मानय | सत्कुरु | मान | Respect |
| दैन्यम् | दीनता | दरिद्रता | poverty |

| | | | |
|---|---|---|---|
| मुदितमनाः | हर्षितमनाः | प्रसन्न | happy |
| लोकम् | जनम् | संसारलाई | People |
| मोदय | तोषय | खुसी बनाऊ | Make happy |
| मिथ्या | मृषा | झुटो | lie |
| पाहि | त्राहि | रक्षा गर | protect |
| लालय | स्नेहं कुरु | माया गर | love |
| दुर्गुणम् | दुराचारम् | खराब आचरण | Bad behavior |
| मारम् | हिंसाम् | हिंसालाई | violence |
| त्यज | मुञ्च | छोड | Leave it |
| अपेयम् | पातुम् अयोग्यम् | पिउन अयोग्य | Unfit for drinking |
| मादकवस्तु | मादकपदार्थम् | मदिराजन्य वस्तु | liqueur |
| परिहेयम् | त्याज्यम् | त्याग्न योग्य | abandon able |
| क्षणम् | किञ्चित्कालम् | थोरै समय | Short time |
| सकलम् | सम्पूर्णम् | सबै | all |
| निजकार्यम् | स्वकार्यम् | आफ्नो काम | Own work |

## अभ्यासः

### श्रवणं भाषणं च

१. कक्षायां पाठस्य श्रवणानन्तरं स्वमातृभाषायां तस्य भावार्थं श्रावयत।

२. मित्रेभ्यः द्वितीयस्य पद्यस्य सरलार्थं श्रुत्वा उत्तरयन

(क) कथं भाषाणम् उचितं नास्ति ?

(ख) कीदृशेन मार्गेण चलनीयम् ?

(ग) कीदृशानि कर्माणि कर्तव्यानि ?

(घ) केषां सेवा करणीया ?

३. शिक्षकात् अधस्तनानि पदानि श्रुत्वा अनुवाचयत

दर्पम्, दैन्यम्, मिथ्या, अनर्थम्, दुर्गुणम्, उद्धारम्, मादकवस्तु, दुर्व्यसनम्, क्षणमपि

४. पाठस्य पद्यानां लयोच्चारणपूर्वकं सामूहिकवाचनं कुरुत।

५. पाठस्य एकैकं पद्यं क्रमेण एकाकी श्रावयत।

६. पाठस्य तृतीयस्य पद्यस्य अन्वयं श्रावयत।

७. शिक्षकात् अनुशासनस्य विषये श्रुत्वा परस्परं विमृशत।

८. सत्यकथने आम् (√ ) असत्यकथने न (✕) इति वदत।

(क) व्यर्थभाषणं समीचीनः स्वभावः अस्ति।

(ख) अस्माभिः दुर्गुणस्य शिक्षणं करणीयम्।

(ग) सर्वदा दीनानाम् उपकारः करणीयः।

(घ) हृदये दीनता हीनता च न धारणीया।

(ङ) अनुजः अनुजा च पाठनीया।

९. पाठस्य प्रारम्भे प्रदत्तां कथां श्रुत्वा प्रश्नान् उत्तरयत

(क) मनोजः कस्मिन् वासरे भ्रमणाय अगच्छत् ?

(ख) मनोजः केन सह भ्रमणाय अगच्छत् ?

(ग) तपोवने किं किं आसीत्।

(घ) वृक्षाः अस्माकं कृते किं ददति ?

(ङ) मानवस्य जीवनं केन सार्थकं भवति ?

१०. श्रवणपाठं पठित्वा उत्तराणि वदत

(क) परोपकारिणः किं न कुर्वन्ति ?

(ख) मानवस्य सर्वोत्तमः गुणः कः ?

(ग) परोपकारी जनः किं किं करोति ?

(घ) नद्यः किमर्थं वहन्ति ?

(ङ) इदं शरीरं किमर्थम् अस्ति ?

## पठनम्

१. अधस्तनं पाठं पठित्वा समयबोधकशब्दान् वदत

### रमायाः दैनन्दिनी

रमा कक्षायाः उत्कृष्टा छात्रा अस्ति। सा प्रातः पञ्चवादने उत्तिष्ठति। प्रथमं सा शौचालयं गच्छति। ततः दन्तधावनं करोति। मुखं च प्रक्षालयति। मातापितरौ नमति। किञ्चित् उष्णं जलं पिबति। योगाभ्यासं च करोति। सा सार्धषड्वादने पठनाय तिष्ठति। सार्धसप्तवादनपर्यन्तं पुस्तकं पठति। गृहकार्यम् अपि करोति। गृहकार्यं कृत्वा सा भोजनालयं गच्छति। मात्रा सह कार्यं करोति। नववादने भोजनं करोति। वस्त्राणि धारयित्वा विद्यालयं गच्छति।

विद्यालयं गत्वा शिक्षकान् नमति। प्रार्थनां कृत्वा कक्षायां प्रविशति। उत्पीठिकायां स्थित्वा पठति। सा प्रतिदिनं पञ्च विषयान् पठति। एकवादने स्वल्पाहारस्य समयः अस्ति। सा गृहाद् आनीतं स्वल्पाहारं गृह्णाति। अवशिष्टे समये सखिभिः सह क्रीडति। ततः सा पुनः कक्षायां गत्वा पठति। चतुर्वादने अवकाशः भवति। सा गृहं गच्छति। वस्त्राणि परिवर्त्य किञ्चित् समयं खेलति। ततः गृहकार्यं करोति। सायङ्काले किञ्चिद् समयं दूरदर्शनं पश्यति। पित्रा सह वार्तालापं करोति। भोजनं कृत्वा नववादने सा शयनं करोति।

रमा आफ्नो कक्षाकी उत्कृष्ट विद्यार्थी हुन्। उनी बिहान पाँच बजे उठ्छिन्। पहिले शौचालय जान्छिन्। त्यसपछि दाँत माझ्छिन् अनि मुख धुन्छिन्। आमाबुबालाई नमस्कार गर्छिन्। थोरै तातो पानी पिएर एकछिन योगाभ्यास गर्छिन्। साढे छ बजे पढ्नका लागि बस्छिन्। साढे सात बजेसम्म पढ्छिन्। गृहकार्य पनि गर्छिन्। गृहकार्य सकेर उनी भोजनालय जान्छिन्। आमालाई काम गर्न सघाउँछिन्। नौ बजे भोजन गर्छिन्। विद्यालयको कपडा लगाएर विद्यालय जान्छिन्।

विद्यालय गएर शिक्षकहरूलाई नमस्कार गर्छिन् । प्रार्थना गरेर कक्षामा पस्छिन्। बेन्चमा बसेर पढ्छिन्। उनी प्रत्येक दिन पाँच विषय पढ्छिन्। एक बजे खाजा खाने बेला हो। उनी घरबाट ल्याएको खाजा खान्छिन्। बाँकी एकछिनको समय साथीहरूसित खेल्छिन्। त्यसपछि फेरि कक्षामा गएर पढ्छिन्। चारबजे विद्यालय छुट्टी हुन्छ। उनी घर जान्छिन्। कपडा फेर्छिन् र एकैछिन खेल्छिन्। अनि गृहकार्य गर्छिन्। साँझपख एकछिन टेलिभिजन हेर्छिन्। त्यसै समयमा बुबासित कुरा पनि गर्छिन्। खाना खाएर नौ बजे उनी सुत्छिन्।

२. पाठस्य आधारेण प्रश्नान् उत्तरयत

(क) रमा कतिवादने उत्तिष्ठति ?

(ख) दन्तधावनं कृत्वा रमा किं करोति ?

(ग) सा नववादने कुत्र गच्छति ?

(घ) सा विद्यालयं गत्वा सर्वप्रथमं किं करोति ?

(ङ) स्वल्पाहारस्य समयः कतिवादने अस्ति ?

(च) रमा कतिवादने शयनं करोति ?

३. पाठस्य अन्तिमस्य अनुच्छेदस्य द्रुतवाचनं कृत्वा शिक्षकं श्रावयत।

४. शिक्षकस्य साहाय्येन प्रदत्तौ श्लोकौ पठत

(क) सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः।
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग् भवेत्॥

(ख) विद्वत्त्वञ्च नृपत्वञ्च नैव तुल्यं कदाचन।
स्वदेशे पूज्यते राजा विद्वान् सर्वत्र पूज्यते॥

५. नेपालिभाषायाम् अर्थं वदत

गत्वा, खादित्वा, पठित्वा, आगत्य, क्रीडित्वा, द्रष्टुम्।

६. अनुस्वारविसर्गयोः प्रयोगं कुरुत

अनुस्वारः (अं) ( ं ) – (क) अंशः (ख) वंशः (ग) संसारः

विसर्गः (अः) (ः) – (क) रामः (ख) देवः (ग) हरिः

पाठं दृष्ट्वा अनुस्वारयुतान्, विसर्गयुतान् च पञ्च पञ्च शब्दान् वदत।

७. शिक्षकस्य साहाय्येन अनेकार्थान् शब्दान् पठत

| | | | |
|---|---|---|---|
| अर्थः = | धनम्, तात्पर्यम् | करः = | हस्तः, किरणः |
| लोकः = | जनः, संसारः | पुण्डरीकः = | सिंहः, कमलम् |
| सर्गः = | विभागः, सृष्टिः | भूतिः = | ऐश्वर्यम्, भस्म |
| इनः = | प्रभुः, सूर्यः | पतङ्गः= | खगः, सूर्यः |
| धर्मः = | यमराजः, पुण्यम् | पदम् = | चिह्नम्, पादः |

## लेखनम्

१. अधस्तनस्य पद्यस्य अन्वयं लिखत

मा पिब मादकवस्तु अपेयम्
मा भज दुर्व्यसनं परिहेयम्।
मा नय क्षणमपि व्यर्थं समयम्
कुरु सकलं निजकार्यं त्वरितम्॥

२. पाठस्य आधारेण उत्तरं लिखत

(क) केषां सम्मानः कर्तव्यः ?

(ख) केषां मोदाय यतनीयम् ?

(ग) अनुजं अनुजां च किं शिक्षणीयम् ?

(घ) कस्य अपसारणं विधेयम् ?

(ङ) किं मा पिब ? मादकवस्तूनां पानेन किं भवति ?

(च) कीदृशः स्वभावः समीचीनो नास्ति ?

३. नेपालिभाषायां भावार्थं लिखत

मा कुरु दर्पम्, मा कुरु गर्वम्
मा भव मानी, मानय सर्वम्।
मा भज दैन्यम्, मा भज शोकम्
मुदितमना भव मोदय लोकम्॥

४. पाठस्य कयोश्चन द्वयोः पद्ययोः श्रुतलेखनं कुरुत।

५. परस्परं मेलयत

| समूह "क" | समूह "ख" |
|---|---|
| शोकम् | कुरु |
| मिथ्या | लालय |
| मादकवस्तु | मा भज |
| उपकारम् | मा वद |
| दीनम् | न पिब |

६. विपरीतार्थकशब्दं चित्वा लिखत

कुमार्गः, अपेयम्, दुर्गुणः, मिथ्या, अपकारः, अनर्थः

(क) अर्थः =

(ख) उपकारः =

(ग) सुगुणः =

(घ) पेयम् =

(ङ) सुमार्गः =

(च) सत्यम् =

७. उचितपदैः रिक्तस्थानं पूरयत

(क) बिल्वपत्रे ....... पत्राणि भवन्ति। (एकम्, द्वे, त्रीणि)

(ख) काकस्य ......... वर्णः भवति। (रक्तः, कृष्णः, पीतः)

(ग) सिंहः ....... गर्जति। (उच्चैः, शनैः, मन्दम्)

(घ) महाभारतस्य रचयिता ...... अस्ति। (वाल्मीकिः, व्यासः, भानुभक्तः)

(ङ) गीतायां ......... अध्यायाः सन्ति। (चतुर्दश, सप्तदश, अष्टादश)

८. उपयुक्तानि पदानि परस्परं संयोज्य वाक्यानि रचयत

| | | |
|---|---|---|
| एकस्मिन् वर्षे | सप्त | मासाः भवन्ति। |
| द्वादशमासेषु | द्वौ | ऋतवः भवन्ति। |
| एकस्मिन् ऋतौ | द्वादश | मासौ भवतः। |
| एकस्मिन् मासे | षट् | दिनानि भवन्ति |
| सप्ताहे | त्रिंशत् | वासराः भवन्ति। |

## व्याकरणानुशीलनम्

१. अधस्तनीं रूपावलिं पठित्वा सङ्केतानुसारेण रूपाणि लिखत

शब्दः – रमा

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | रमा | रमे | रमाः |
| द्वितीया | रमाम् | रमे | रमाः |
| तृतीया | रमया | रमाभ्याम् | रमाभिः |
| चतुर्थी | रमायै | रमाभ्याम् | रमाभ्यः |
| पञ्चमी | रमायाः | रमाभ्याम् | रमाभ्यः |
| षष्ठी | रमायाः | रमयोः | रमाणाम् |
| सप्तमी | रमायाम् | रमयोः | रमासु |
| सम्बोधनम् | हे रमे ! | हे रमे ! | हे रमाः ! |

(क) प्रभाशब्दस्य सर्वाणि रूपाणि

(ख) ताराशब्दस्य प्रथमा–द्वितीययोः रूपाणि

(ग) धराशब्दस्य चतुर्थीविभक्तेः रूपाणि

(घ) कक्षाशब्दस्य सप्तम्याः रूपाणि

(ङ) मन्दिराशब्दस्य षष्ठ्याः रूपाणि

२. कोष्ठकस्य सङ्केतं दृष्ट्वा रिक्तस्थानं पूरयत

(क) मम गृहस्य समीपे पाठशाला अस्ति।

(ख) ................ (पाठशालाशब्दस्य सप्तम्येकवचनम्) छात्राः पठन्ति।

(ग) तत्र दश .......... (कक्षाशब्दस्य प्रथमाबहुवचनम्) सन्ति।

(घ) ............ (कक्षाशब्दस्य सप्तमीबहुवचनम्) उत्पीठिकाः सन्ति।

(ङ) दशमकक्षायां द्वे ........... (छात्राशब्दस्य प्रथमाद्विवचनम्) स्तः।

(च) अन्याः कक्षाः .............. (छात्राशब्दस्य तृतीयाबहुवचनम्) पूरिताः सन्ति।

(छ) छात्राः ............. (शिक्षाशब्दस्य चतुर्थ्येकवचनम्) समर्पिताः सन्ति।

(ज) ते ............ (पाठशालाशब्दस्य पञ्चम्येकवचनम्) शिक्षां प्राप्नुवन्ति।

(झ) शिक्षकाणां ............ (शिक्षिकाशब्दस्य षष्ठीबहुवचनम्) च अध्यापनं समीचीनम् अस्ति।

३. अधस्तनान् शब्दान् पठित्वा भिन्नतां दर्शयत

| समूहः क | समूहः ख |
|---|---|
| पुस्तकानाम् | रामाणाम् |
| पुस्तकानि | मन्दिराणि |
| गुणानाम् | दोषाणाम् |
| महिलानाम् | मनुष्याणाम् |
| बाणेन | रोषेण |

उपरि "क" समूहस्थेषु शब्देषु "नाम्, नि, न" इत्यत्र नकारः वर्तते । "ख" समूहे "णाम्, णि, ण" इत्यादौ णकारः वर्तते । "क" समूहे नकारात् पूर्वम् र, ष एतौ वर्णौ न स्तः । किन्तु "ख" समूहे णकारात् पूर्वं रेफः (र, षकारः वा वर्तते । यत्र र, ष एतौ वर्णौ भवतः, तत्र नकारः न भवति, णकारः भवति । "रामाणाम्, रोषेण" इत्यत्र रेफः षकारः वा वर्तते । अतः "रामानाम्, दोषेन" इति न भवति । "रामाणाम्, रोषेण" इति भवति । तथैव "बाणेन, महिलानाम्" इत्यत्र रेफः षकारः वा नास्ति । अतः अत्र नकारस्य स्थाने णकारस्य प्रयोगः नास्ति । एषः नियमः णत्वनियमः कथ्यते ।

४. शुद्धं शब्दं परिचिनुत

(क) बालकाणाम्, बालकानाम्

(ख) मनुष्येण, मनुष्येन

(ग) सुन्दरानि, सुन्दराणि

(घ) वारीनि, वारीणि

(ङ) कर्मचारिनः, कर्मचारिणः

५. णत्वनियमयुतान् शब्दान् पुस्तिकायां लिखत

नेपाले सुन्दराणि नगराणि सन्ति । नगरेषु उपवनानि सन्ति । उपवनेषु नाना पुष्पाणि विकसन्ति । पुष्पेषु मधुमक्षिकाणां निवासः भवति । मधुमक्षिकाः पुष्पाणां रसं खादन्ति । ते रसस्य माध्यमेन मधु कारयन्ति । मधु मधुरं भवति । मधुरेण मधुना वयं सन्तुष्टाः भवामः । सन्तोषेण सुखं भवति । सुखाय एव जनाः कर्माणि कुर्वन्ति । कर्म कृत्वा जनाः स्वस्थाः भवन्ति । स्वस्थानां शरीरे रोगाणाम् वासः न भवति । रोगिणा शरीरेण जनः कर्म कर्तुं न शक्नोति ।

## रचनात्मकः अभ्यासः

१. स्वस्य पुस्तिकायां घटिकां निर्माय समयं निर्दिशत




| एकवादनम् | सपाद–एकवादनम् | सार्ध–एकवादनम् | पादोनद्विवादनम् |
|---|---|---|---|
| २:०० | २:१५ | २:३० | २:४५ |
| ....... | ......... | ......... | ......... |
| ३:०० | ३:१५ | ३:३० | ४:४५ |
| ....... | ......... | ......... | ......... |

२. प्रदत्तानां पदानां साहाय्येन चित्रं वर्णयत



(क) सा श्रुतिः अस्ति ।

(ख) तस्याः ...... उत्पीठिका अस्ति ।

(ग) उत्पीठिकायाः .......... पुस्तकानि सन्ति।

(घ) उत्पीठिकायाः .......... कन्दुकम् अस्ति।

(ङ) श्रुतेः ............... घटिका अस्ति।

(च) तस्याः ............. अनुजः अस्ति।

(छ) तस्याः ........... अनुजा अस्ति।

| उपरि, वामतः, अधः, पृष्ठतः, दक्षिणतः, पुरतः |
| --- |

**श्रवणपाठः**

परोपकारिणः स्वार्थं न कुर्वन्ति। ते परोपकारं कुर्वन्ति। परेषाम् उपकारः परोपकारः अस्ति। परोपकारः मानवस्य सर्वोत्तमः गुणः अस्ति। परोपकारी जनः समाजसेवां करोति। सः देशप्रेम करोति। तस्य मनसि राष्ट्रभक्तिः भवति। अन्येषां कृते सहानुभूतिः भवति। तस्य हृदयं पवित्रं, सरलं, सरसं च भवति। अतः परोपकारः मानवजीवने आवश्यकः भवति। परोपकारविषये शास्त्रवचनमपि अस्ति यत् –

परोपकाराय फलन्ति वृक्षाः
　　　　परोपकाराय वहन्ति नद्यः।
परोपकाराय दुहन्ति गावः
　　　　परोपकारार्थमिदं शरीरम्॥

षष्ठः पाठः

# भ्रातृप्रेम

## पाठप्रवेशः

## भ्रातृप्रेम



(महेशः चौधरी अग्रजः अस्ति । लोकेशः चौधरी अनुजः अस्ति। उभौ क्रीडन्तौ स्तः। लोकेशः कन्दुकेन क्रीडन् अस्ति । महेशः द्विचक्रिकां चालयन् अस्ति । लोकेशः कन्दुकेन द्विचक्रिकां प्रहरति। महेशः कन्दुकं दूरं क्षिपति । ततः तयोः कलहः जायते।)

लोकेशः – मम कन्दुकं देहि।

महेशः – स्वयम् आनय। अहं न शक्नोमि।

लोकेशः – त्वं क्षिप्तवान् असि। त्वम् एव आनय। नोचेत् मातरं वदामि ।

महेशः – त्वं मम द्विचक्रिकां प्राहरः । अतः अहं कन्दुकम् अक्षिपम् । तुल्यम् अभवत्। त्वं कन्दुकम् आनय। अहं द्विचक्रिकाम् उत्थापयामि।

लोकेशः – एतत् मम क्रीडास्थलम् अस्ति। त्वम् अत्र कथं द्विचक्रिकाम् आनयसि ? त्वम् अन्यत्र एव क्रीड।

महेशः – इदं मम अपि गृहम् अस्ति। अहम् अपि अत्र क्रीडामि। त्वम् अन्यत्र गच्छ। (पितामही आगच्छति।)

पितामही – किमर्थं कलहं कुरुथः युवाम् ?

युवाम् एवं न कुरुतम् । कलहः न कर्तव्यः । मिलित्वा क्रीडनीयम् । मेलने कः अपि युवां जेतुं न शक्नोति । कलहं कुरुथः चेद् अन्ये युवां जयन्ति ।

लोकेशः – एवम् अस्ति ? तर्हि अहं कलहं न करोमि ।

महेशः – अहम् अपि अनुजे स्नेहं करोमि ।

पितामही – (हसित्वा) धन्यवादः । सदा एवं कर्तव्यम् । आगच्छतम् । अहम् अद्य युवां रामायणस्य कथां श्रावयामि ।

महेश चौधरी दाजु हो । लोकेश चौधरी भाइ हो । दुवै खेल्दै छन् । लोकेश भकुन्डो खेल्दै छ । महेश साइकल चलाउँदै छ । लोकेश भकुन्डोले साइकललाई हान्छ । महेश भकुन्डो टाढा फ्याँकिदिन्छ। त्यसपछि ती दुईको झगडा पर्छ। लोकेश भन्छ, “मेरो भकुन्डो देऊ ।” महेश भन्छ, “आफैँ ल्याऊ । म सक्दिनँ ।” लोकेश भन्छ, “तिमीले फालेका हौ । तिमी नै ल्याऊ । नत्र म आमालाई भनिदिन्छु ।” महेश भन्छ, “तिमीले मेरो साइकललाई हान्यौ । मैले भकुन्डो फालिदिएँ । बराबर भयो । तिमी भकुन्डो ल्याऊ । म साइकल उठाउँछु ।” लोकेश भन्छ, “म खेल्ने ठाउँमा तिमी किन साइकल ल्याउँछौ त ? तिमी अन्तै खेल ।” महेश भन्छ, “यो मेरो पनि घर हो । म पनि यहाँ खेल्छु । तिमी अन्तै जाऊ न ।” हजुरआमा आउनुहुन्छ र भन्नुहुन्छ, “किन झगडा गर्छौ तिमीहरू ?” “तिमीहरू यसो नगर । झगडा गर्नु हुँदैन मिलेर खेल्नुपर्छ । दाजुले भाइलाई माया गरोस् । भाइले दाजुको सम्मान गरोस् । यस्तो पो राम्रो हुन्छ । मिलेमा कसैले पनि तिमीहरूलाई जित्न सक्दैन । झगडा गर्‍यौ भने अरूले तिमीहरूलाई जित्छन् ।” लोकेश भन्छ, “यस्तो हो ? त्यसो भए म झगडा गर्दिनँ ।” महेश भन्छ, “म पनि भाइलाई माया गर्छु ।” हजुरआमा हाँस्दै भन्नुहुन्छ, “धन्यवाद । सधैँ यस्तो गर्नुपर्छ । आओ, म तिमीहरूलाई आज रामायणको कथा सुनाउँछु ।”

**मूलपाठः** 

## भ्रातृप्रेम

पुरा अयोध्यायां दशरथनामकः राजा आसीत्। तस्य तिस्रः पत्न्यः आसन्। तस्य चत्वारः पुत्राः अजायन्त। कौशल्या रामस्य माता आसीत्। कैकयी भरतस्य माता आसीत्। सुमित्रा लक्ष्मणस्य शत्रुघ्नस्य च माता आसीत्। राजकुमारेषु अनुपमं भ्रातृप्रेम आसीत्। सर्वे परस्परम् अत्यन्तं स्निह्यन्ति स्म। रामः ज्येष्ठः आसीत्। अतः अन्ये त्रयः तम् आदरन्ति स्म। भ्रातरः तस्य आज्ञां पालयन्ति स्म। रामः नाम अपि प्रियः आसीत्। इच्छान्तिस्मा दशरथः रामस्य राज्याभिषेकं कर्तुम् ऐच्छत्। उपयुक्ते मुहूर्ते सः राज्याभिषेकं समायोजितवान्। ग्रामे ग्रामे नगरे नगरे उत्सवः अभवत्। जनाः गीतम् अगायन्, नृत्यं च अकुर्वन्। राज्याभिषेके देशाद् विदेशेभ्यः च अनेके जनाः आगच्छन्। सर्वे प्रसन्नाः आसन्।

कैकय्याः एका दासी आसीत्। तस्याः नाम मन्थरा आसीत्। सा कैकयीं प्रेरितवती। ततः कैकयी राजानं दशरथम् आहूतवती। दशरथः कदाचित् कैकयीं द्वौ वरौ याचितुं कथितवान् आसीत्। कैकयी "उपयुक्ते समये याचिष्यामि" इति कथितवती आसीत्। कैकयी तं विषयं राजानम् अस्मारयत्। सा अकथयत्, "पूर्वं प्रतिज्ञातौ द्वौ वरौ ददातु। प्रथमः भरतस्य राज्याभिषेकः। द्वितीयः चतुर्दश वर्षाणि यावद् रामस्य वनवासः"। राजा वचनबद्धः आसीत्। अतः सः "तथास्तु" इति अकथयत्। परं तस्य मनसि महती चिन्ता अभवत्। सः रामं कथयितुम् अपि न अशक्नोत्। रामः पितुः मनोभावम् अजानात्। सः स्वयम् एव वनं गन्तुं तत्परः अभवत्। सीतालक्ष्मणौ अपि तम् अन्वगच्छताम्। जनाः दुःखिताः अभवन्। ते अपि रामम् अन्वगच्छन्। रामः तान् बोधयित्वा प्रत्यावर्तयत्। ते त्रयः वनम् अगच्छन्।

रामस्य वनगमनेन दशरथः अत्यन्तं दुःखितः अभवत्। सः तेन एव दुःखेन प्राणान् अत्यजत्। भरतः तस्मिन् समये मातुलगृहं गतवान् आसीत्। सः अयोध्याम् आगच्छत्। पितुः प्राणत्यागेन अग्रजस्य वनगमनेन च सः दुःखितः अभवत्। प्रथमं सः पितुः अन्त्येष्टिम् अकरोत्। सः प्रजानाम् इच्छां ज्ञातवान् आसीत्। अग्रजे च तस्य प्रेम अतुलनीयम् आसीत्। अतः सः रामं प्रत्यावर्तयितुम् इच्छति स्म। सः रामम् एव

राजानं कर्तुम् इच्छति स्म। तेन सः अपि वनम् अगच्छत्। कतिचित् जनाः अपि तम् अन्वगच्छन्।

रामः चित्रकूटे कुटीरं निर्माय स्थितवान् आसीत्। भरतः तत्र प्रापत्। सः रामम् अनमत्। सः पितुः प्राणत्यागस्य सन्देशम् अश्रावयत्। सीतालक्ष्मणाभ्यां सहितः रामः पितुः अन्त्येष्टिम् अकरोत्। ततः भरतः रामम् अकथयत्, "भो अग्रज ! भवान् अस्माकं सम्मान्यः अस्ति। पितुः अनन्तरं राज्यं भवतः अस्ति। अहं कथम् अपि राजा भवितुं न इच्छामि। जनाः अपि भवन्तम् इच्छन्ति। अतः भवान् अयोध्यां प्रत्यागच्छतु।" भरतस्य वचनं श्रुत्वा रामः अकथयत्, "भो अनुज ! त्वं मयि स्नेहं करोषि। अतः इत्थं वदसि। परं पितुः आज्ञां स्वीकृत्य अहं वनम् आगतवान् अस्मि। यदि अहं प्रत्यागच्छामि, तर्हि पितुः आज्ञायाः उल्लङ्घनं भवति। अतः अहं प्रत्यावर्तितुं न शक्नोमि। त्वं राज्यं सञ्चालय। त्वं राज्यं न सञ्चालयसि चेत् पितुः आज्ञायाः उल्लङ्घनं भवति। तेन मम वनगमनम् एव उचितम् अस्ति। तव राज्यसञ्चालनम् एव उचितम् अस्ति।"



भरतः रामस्य वचनं न स्वीकृतवान्। सः पुनः अकथयत्, "भवान् वनं गच्छति चेत् अहम् अपि वनं गच्छामि।" रामः अकथयत्, "त्वम् अपि वनं गच्छसि चेद् अयोध्यायाः राज्यं कः सञ्चालयति ? एवं न कर्तव्यम्। पितुः आज्ञापालनेन त्वं राज्यं सञ्चालय। वनवासं समाप्य अहम् आगमिष्यामि। ततः तव राज्यसञ्चालने सहयोगं करिष्यामि।" भरतः अकथयत्, "राज्यं भवतः एव अस्ति। भवान् अधुना न प्रत्यावर्तते चेत् भवतः प्रतिनिधिः भूत्वा अहं राज्यं सञ्चालयामि। यदा भवान् प्रत्यागच्छति, तदा भवान् एव राजा भवतु। अहं सहयोगं करिष्यामि।" भरतस्य वचनं रामः स्वीकृतवान्।

भरतः रामस्य पादुके अयाचत । सः ते पादुके शिरसि कृत्वा ततः प्रत्यागच्छत् । सः अयोध्यां न अगच्छत्, नन्दिग्रामतः राज्यसञ्चालनम् अकरोत् । सः रामस्य पादुके सिंहासने अस्थापयत् । प्रतिदिनं ते पादुके प्रणम्य सः राज्यसञ्चालनम् अकरोत् ।

चतुर्दश वर्षाणि व्यत्यगच्छन् । रामस्य वनवाससमयः समाप्तः अभवत् । रामः अयोध्यां प्रत्यागच्छत् । भरतः अपि अयोध्याम् अगच्छत् । भरतः नेत्रयोः अश्रूणि धारयन् रामम् अनमत् । रामः भरतम् उरसि कृत्वा अकथयत्, "त्वं धन्यः असि । त्वादृशेन अनुजेन अहम् अपि धन्यः अस्मि ।" भरतः पादुके रामाय समर्प्य अकथयत्, "इतः परं राज्यभारं भवान् एव वहतु ।" रामः भरतस्य वचनं स्वीकृतवान् ।

रामस्य राज्याभिषेकः अभवत् । जनाः प्रसन्नाः अभवन् । अनुजानां सहयोगेन रामः सम्यग् राज्यसञ्चालनम् अकरोत् । सः जनानां पितृवत् पालनम् अकरोत् । तस्य राज्ये सर्वे सुखिनः आसन् । राज्यं पूर्णतः समृद्धम् आसीत् । अद्य अपि रामराज्यं सर्वे प्रशंसन्ति ।

पहिले अयोध्यामा दशरथ नामका राजा थिए । तिनका तीन पत्नीहरू थिए । तिनका चार छोराहरू जन्मिए । कौशल्या रामकी आमा थिइन् । कैकयी भरतकी आमा थिइन् । सुमित्रा लक्ष्मण र शत्रुघ्नकी आमा थिइन् । राजकुमारहरूमा तुलना गर्न नसकिने प्रेम थियो । सबै आपसमा एकदम स्नेह गर्थे । राम जेठा थिए । त्यसैले अरू तीन भाइ उनलाई सम्मान गर्दथे । भाइहरू रामको आज्ञा मान्दथे । राम जनताका पनि प्यारा थिए । जनता रामलाई राजा बनाउन चाहन्थे । त्यो बुझेर दशरथले रामलाई राजा बनाउन चाहे । ठिक मुहूर्तमा उनले राज्याभिषेकको आयोजना गरे । गाउँ गाउँ र सहर सहरमा उत्सव भयो । जनताले गीत गाए र नाचे । राज्याभिषेकमा देशविदेशबाट थुप्रै मानिसहरू आए । सबै खुसी थिए ।

कैकयीकी एउटी दासी थिई । उसको नाम मन्थरा थियो । उसले कैकयीलाई उचाली । त्यसपछि कैकयीले राजा दशरथलाई बोलाइन् । दशरथले कुनै समयमा कैकयीलाई दुई वर माग्न भनेका थिए । कैकयीले "उपयुक्त समयमा माग्नेछु" भनेकी थिइन् । कैकयीले राजालाई त्यो कुरा सम्झाइन् । उनले भनिन्– "पहिले

प्रतिज्ञा गरेका दुई वर दिनुहोस् । पहिलो वर हो भरतको राज्याभिषेक र दोस्रो वर हो रामलाई चौध वर्षसम्म वनवास ।" राजा वचनले बाँधिएका थिए । उनले "हुन्छ" भने । तर उनको मनमा ठुलो चिन्ता भयो । उनले रामलाई भन्न पनि सकेनन् । रामले पिताको मनको भावना बुझे । उनी आफैँ वन जान तयार भए । सीता र लक्ष्मणले तिनलाई पछ्याए । जनता दुःखी भए । उनीहरू पनि रामलाई पछ्याउन थाले । रामले तिनीहरूलाई सम्झाई बुझाई फर्काए । उनीहरू तीन जना वन गए ।

राम वन जानाले दशरथ एकदम दुःखी भए । त्यही दुःखका कारण उनले प्राण त्यागे । भरत त्यस बेला मामाघर गएका थिए । उनी अयोध्या फर्किए । पिताको मृत्यु र दाजुको वनगमनले उनी दुःखी भए । पहिला उनले पिताको अन्त्येष्टि गरे । उनले जनताहरूको इच्छा बुझेका थिए । दाजुमा पनि उनको अत्यन्त प्रेम थियो । त्यस कारण उनी रामलाई फर्काउन चाहन्थे । उनी रामलाई नै राजा बनाउन चाहन्थे । त्यसैले उनी वनतर्फ लागे । केही प्रजाहरूले पनि उनलाई पछ्याए ।

राम चित्रकूटमा कुटी बनाएर बसेका थिए । भरत त्यहाँ पुगे । उनले रामलाई ढोगे । उनले पिताले प्राणत्याग गरेको खबर रामलाई सुनाए । सीता र लक्ष्मण सहित भएर रामले पिताको अन्त्येष्टि गरे । त्यसपछि भरतले रामलाई भने– "हे दाजु ! तपाईं हामी सबैका सम्मान्य हुनुहुन्छ । बुबापछि राज्य तपाईंको हो । म कुनै पनि हालतमा राजा हुन चाहन्नँ । जनताहरू पनि तपाईंलाई नै चाहन्छन् । त्यसैले तपाईं अयोध्या फर्कनुहोस् ।" भरतको कुरा सुनेर रामले भने– "हे भाइ ! तिमी मलाई माया गर्छौ । त्यसैले यस्तो भन्दछौ । तर म पिताको आज्ञा स्वीकार गरेर वनमा आएको हुँ । म फर्किएँ भने पिताको आज्ञाको उल्लङ्घन हुन्छ । त्यसैले म फर्किन सक्दिनँ । तिमी राज्य चलाऊ । तिमीले राज्य चलाएनौ भने पनि पिताको आज्ञाको उल्लङ्घन हुन्छ । त्यसैले म वन जानु नै उचित हो, तिमीले राज्य चलाउनु नै उचित हो ।"

भरतले रामको कुरालाई स्वीकार गरेनन् । उनले फेरि भने– "तपाईं वन जानुहुन्छ भने म पनि वन नै जान्छु ।" रामले भने– "तिमी पनि वन गयौ भने अयोध्याको

राज्य कसले सञ्चालन गर्छ ? यस्तो गर्नुहुँदैन । पिताको आज्ञापालन गर्दै तिमी राज्य सञ्चालन गर। वनवास सकेर म फर्कनेछु र तिम्रो राज्यसञ्चालनमा सहयोग गर्नेछु।" रामको कुरा सुनेर भरतले फेरि भने– "राज्य तपाईँकै हो। तपाईँ अहिले फर्कनुहुन्न भने म तपाईँको प्रतिनिधि भएर राज्यसञ्चालन गर्छु। जब तपाईँ फर्कनुहुन्छ, तब तपाईँ नै राजा बन्नुहोस्। म तपाईँको सहयोगी बन्नेछु।" भरतको कुरा रामले स्वीकार गरे।

भरतले रामका खराउ मागे। ती खराउ शिरमा राखी तिनी त्यहाँबाट गए। उनी अयोध्या गएनन्। नन्दीग्राम भन्ने ठाउँमा बसी उनले राज्यसञ्चालन गरे। उनले रामको खराउलाई सिंहासनमा राखे। हरेक दिन ती खराउलाई ढोगेर राज्यसञ्चालन गरे।

चौध वर्ष बिते। रामको वनवासको समय सकियो। राम अयोध्या फर्किए। भरत पनि अयोध्या आए। भरतले आँखाभरि आँसु पारी रामलाई ढोगे। रामले भरतलाई छातीमा टाँसेर भने– "तिमी धन्य छौ। तिमीजस्ता भाइका कारण म पनि धन्य छु।" भरतले खराउ रामलाई दिँदै भने– "यसपछि राज्यको भार तपाईँ नै बोक्नुहोस्।" रामले भरतको कुरा स्वीकार गरे।

रामको राज्याभिषेक भयो। जनताहरू खुसी भए। भाइहरूको सहयोगले रामले राम्रोसँग राज्यसञ्चालन गरे। उनले पिताजस्तो बनेर जनताहरूको पालन गरे। तिनका राज्यमा सबै सुखी थिए। राज्य पूर्ण रूपमा समृद्ध थियो। आज पनि रामराज्यको सबैले प्रशंसा गर्दछन्।

## शब्दार्थाः

| मूलशब्दः | संस्कृते पर्यायः | नेपाल्याम् अर्थः | आङ्गलभाषायाम् अर्थः |
|---|---|---|---|
| अग्रजः | ज्येष्ठभ्राता | दाजु | Elder brother |
| अनुजः | कनिष्ठभ्राता | भाइ | Younger brother |
| क्रीडन् | खेलन् | खेल्दै | Playing |
| द्विचक्रिका | चक्रोभयिका | साइकल | Bicycle |

| | | | |
|---|---|---|---|
| कन्दुकम् | गेन्दुकम् | भकुन्डो | Ball |
| क्षिपति | निक्षिपति | फ्याँक्छ | Throws |
| कलहः | विवादः | झगडा | Fight, dispute |
| नो चेत् | एवं न स्यात् तर्हि | नत्र भने | Otherwise |
| क्रीडितुम् | खेलितुम् | खेल्न | To play |
| समीचीनम् | शोभनम् | राम्रो | Good |
| जेतुम् | अतिशयितुम् | जित्न | To win |
| तर्हि | एवं स्यात् चेत् | त्यसो भए | Otherwire |
| सदा | सर्वदा | सधैँ | Always |
| पुरा | प्राचीनकाले | पहिले | Once upon a time |
| तिस्रः | त्रिसङ्ख्यकाः (स्त्री) | तीनओटी | Three |
| प्रसन्नः | हर्षितः | खुसी | Happy |
| चत्वारः | चतुःसङ्ख्यकाः (पुं) | चारओटा | Four |
| दासी | भृत्या | नोकर्नी | Maid |
| याचितुम् | अर्थितुम् | माग्न | To ask, to beg |
| तत्परः | उद्यतः | तयार | Ready |
| अन्वगच्छत् | अन्वयात् | पछि लाग्यो | Followed |
| बोधयित्वा | प्रबोध्य | बुझाएर | By explaining |
| प्रत्यावर्तयत् | प्रत्यागमयत् | फर्काए | Returned |
| अत्यजत् | अजहात् | त्याग्यो | Abandoned |
| अन्त्येष्टिम् | अन्त्यकर्म | मरेपछि गरिने कर्म | Karma done after death |
| प्रत्यावर्तयितुम् | प्रत्यागमयितुम् | फर्काउन | To return |
| कुटीरम् | कुटी | झुपडी | hut |

| | | | |
|---|---|---|---|
| अनन्तरम् | तत्पश्चात् | त्यसपछि | Then |
| इत्थम् | एवम् | यस्तो/यसरी | Such |
| अधुना | इदानीम् | अहिले | Now |
| पादुका | पादत्राणम् | चप्पल/जुत्ता/ खराउ | Slippers, shoes |
| प्रणम्य | नमस्कृत्य | ढोगेर | Bow down |
| व्यत्यगच्छत् | व्यत्ययात् | बित्यो | Passed |
| अश्रु | नेत्रजलम् | आँसु | Tears |
| उरः | वक्षः | छाती | Chest |
| सम्यक् | शोभनतया | राम्ररी | Well |

## अभ्यासः

### श्रवणं भाषणं च

१. स्वयम् उच्चार्य सामूहिकरूपेण उच्चारयितुं सखीन् निर्दिशत

अयोध्यायाम्, शत्रुघ्नस्य, भ्रातृप्रेम, राज्याभिषेकम्, अस्मारयत्, प्रतिज्ञातौ, वचनबद्धः, सीतालक्ष्मणौ, प्रत्यावर्तयत्, प्राणत्यागेन।

२. शिक्षकमुखात् श्रुत्वा सामूहिकरूपेण अनूच्चारयत

प्रत्यावर्तयितुम्, अन्वगच्छन्, अन्त्येष्टिम्, श्रुत्वा, प्रत्यागच्छामि, उल्लङ्घनम्, राज्यसञ्चालनम्, समाप्य, प्रणम्य, व्यत्यगच्छन्, अश्रूणि, समृद्धम्।

३. पाठस्य द्वितीयानुच्छेदं श्रुत्वा स्वमातृभाषायां घटनाक्रमं श्रावयत।

४. पाठस्य प्रथमम् अनुच्छेदं श्रुत्वा निम्नप्रश्नान् उत्तरयत

(क) दशरथस्य कति पुत्राः आसन् ?

(ख) कैकयी कस्य माता आसीत् ?

(ग) कः ज्येष्ठः आसीत् ?

(घ) जनाः किम् इच्छन्ति स्म ?

(ङ) कुत्र उत्सवः अभवत् ?

५. पाठस्य तृतीयम् अनुच्छेदं सख्युर्मुखात् श्रुत्वा निम्नपदानां सान्दर्भिकम् अर्थं श्रावयत

अत्यन्तम्, एव, मातुलगृहम्, प्राणत्यागेन, अन्त्येष्टिः, अतुलनीयम्, प्रत्यावर्तयितुम्, कर्तुम्।

६. पाठस्य कथायाः कः सन्देशः ? मातृभाषायां वदत।

७. पाठस्य अन्तिमम् अनुच्छेदं पठित्वा सत्यम् असत्यं वा इति कथयत

(क) भरतस्य राज्याभिषेकः अभवत्।

(ख) जनाः प्रसन्नाः अभवन्।

(ग) रामः समीचीनतया राज्यसञ्चालनं न अकरोत्।

(घ) रामः पितृवत् जनानां पालनम् अकरोत्।

(ङ) रामस्य राज्ये सर्वे सुखिनः आसन्।

(च) रामस्य राज्यं समृद्धं न आसीत्।

(छ) अद्य जनाः रामराज्यं निन्दन्ति।

८. अधस्तनं श्लोकं शिक्षकात् श्रुत्वा अनूच्चारयत, ततः शिक्षकात् तदर्थं श्रुत्वा महात्मनां गुणान् कथयत

विपदि धैर्यमथाभ्युदये क्षमा
सदसि वाक्पटुता युधि विक्रमः।
यशसि चाभिरुचिर्व्यसनं श्रुतौ
प्रकृतिसिद्धमिदं हि महात्मनाम्॥

९. अधस्तनम् अनुच्छेदं शिक्षकात् श्रुत्वा धीरेन्द्रस्य विषये स्वभाषायां कथयत

नरेन्द्रः सुनुवारः खोटाङमण्डले निवसति। सः चतुर्थकक्षायां पठति। तस्य अग्रजस्य नाम धीरेन्द्रः सुनुवारः अस्ति। सः षष्ठकक्षायां पठति। धीरेन्द्रः अनुजे

अतीव स्नेहं करोति । नरेन्द्रः अपि अग्रजस्य सम्मानं करोति । नरेन्द्रः सर्वेषु कार्येषु धीरेन्द्रम् अनुगच्छति । धीरेन्द्रः सम्यक् पठति । अतः नरेन्द्रः अपि सम्यक् पठति । धीरेन्द्रः सदैव विद्यालयं गच्छति । अतः नरेन्द्रः अपि सदैव विद्यालयं गच्छति । धीरेन्द्रः अनुजं सहैव विद्यालये नयति । मार्गे अनुजस्य हस्तं गृहीत्वा एव सः गच्छति । धीरेन्द्रः पूर्वम् अनुजं कक्षायां प्रापयति । ततः स्वस्य कक्षायां गच्छति । तौ गृहम् अपि सहैव आगच्छतः । धीरेन्द्रः अनुशासितः अस्ति । अतः नरेन्द्रः अपि अनुशासितः अस्ति । शिक्षकाः तौ प्रशंसन्ति । माता प्रसन्ना भवति । पिता धन्यवादं ददाति ।

नरेन्द्र सुनुवार खोटाङ जिल्लामा बस्छन् । उनी चार कक्षामा पढ्छन् । उनका दाजुको नाम धीरेन्द्र सुनुवार हो । उनी छ कक्षामा पढ्छन् । धीरेन्द्र भाइलाई धेरै माया गर्छन् । नरेन्द्र पनि दाजुको सम्मान गर्छन् । नरेन्द्र सबै काममा धीरेन्द्रलाई पछ्याउँछन् । धीरेन्द्र राम्ररी पढ्छन् । त्यसैले नरेन्द्र पनि राम्ररी पढ्छन् । धीरेन्द्र सधैँ विद्यालय जान्छन् । त्यसैले नरेन्द्र पनि सधैँ विद्यालय जान्छन् । धीरेन्द्र भाइलाई सधैँ सँगै विद्यालय लैजान्छन् । बाटामा भाइको हात समातेर मात्र उनी हिँड्छन् । धीरेन्द्र पहिला भाइलाई कक्षामा पुऱ्याउँछन् । त्यसपछि आफ्नो कक्षामा जान्छन् । ती दुई घर पनि सँगै जान्छन् । धीरेन्द्र अनुशासित छन् । त्यसैले नरेन्द्र पनि अनुशासित छन् । शिक्षकहरू ती दुईको प्रशंसा गर्नुहुन्छ । आमा खुसी हुनुहुन्छ । बुवा धन्यवाद दिनुहुन्छ ।

१०. श्रवणपाठं श्रुत्वा प्रश्नान् उत्तरयत

(क) कौ माद्रीपुत्रौ आस्ताम् ?

(ख) चत्वारः अनुजाः कस्य आज्ञां न उल्लङ्घयन्ति स्म ?

(ग) प्रथमं कः जलम् आनेतुम् अगच्छत् ?

(घ) के यक्षस्य वचनं तिरस्कृत्य निर्जीवाः अभवन् ?

(ङ) युधिष्ठिरः कं जीवयितुम् ऐच्छत् ?

(च) यक्षः कान् अजीवयत् ?

(छ) रिक्तस्थानं पूरयत

(अ) पाण्डवाः .......... आसन्। (चत्वारः, पञ्च, षट्)

(आ) ......... ज्येष्ठः आसीत्। (युधिष्ठिरः, भीमः, अर्जुनः)

(इ) पाण्डवाः ......... चलन्ति स्म। (धर्ममार्गेण, पापमार्गेण, उभयमार्गेण)

(ई) ........ प्रश्नं प्रष्टुम् ऐच्छत्। (युधिष्ठिरः, सहदेवः, यक्षः)

(उ) .......... सतर्कं समुचितम् उत्तरम् अददात्। (अर्जुनः, भीमः, युधिष्ठिरः)

## पठनम्

१. पाठस्य आरम्भे वर्तमानं संवादं साभिनयं पठत।

२. पाठस्य कथायाः सस्वरं वाचनं कुरुत।

३. पाठस्य द्वितीयस्य अनुच्छेदस्य द्रुतपठनं कुरुत।

४. पाठस्य चतुर्थस्य अनुच्छेदस्य मौनपठनं कृत्वा उपयुक्तैः पदैः रिक्तस्थानं पूरयत

(क) रामः ....... स्थितवान् आसीत्।

(ख) ........ रामम् अनमत्।

(ग) रामः ....... अन्त्येष्टिम् अकरोत्।

(घ) पितुः अनन्तरं राज्यं ........ अस्ति।

(ङ) ....... रामम् इच्छन्ति।

(च) भरतः ...... राजा भवितुं न इच्छति।

(छ) रामः पितुः ...... स्वीकृत्य वनम् आगतवान् अस्ति।

(ज) रामः प्रत्यागच्छति चेत् पितुः आज्ञायाः .......... भवति।

(झ) रामस्य वनगमनम् ........ अस्ति।

(ञ) भरतस्य .......... उचितम् अस्ति।

५. अधस्तनं श्लोकं पठित्वा प्रदत्तप्रश्नानाम् उत्तराणि पूर्णवाक्येन लिखत

को धर्मो ? भूतदया, किं सौख्यम् ? नित्यमरोगिता जगति।

कः स्नेहः ? सद्भावः, किं पाण्डित्यं ? परिच्छेदः ॥

| प्रश्नः | | उत्तरवाक्यानि |
|---|---|---|
| (क) | जगति धर्मः कः अस्ति ? | |
| (ख) | जगति सौख्यं किम् अस्ति ? | |
| (ग) | जगति स्नेहः कः अस्ति ? | |
| (घ) | जगति पाण्डित्यं किम् अस्ति ? | |

६. उपरितनस्य श्लोकस्य पदार्थान् पठित्वा तस्य श्लोकस्य आशयं स्वभाषया वदत

| पदानि | अर्थाः |
|---|---|
| जगति | यस संसारमा |
| धर्मः | राम्रो काम |
| कः | के/को |
| भूतदया | सम्पूर्ण प्राणीमा दया गर्नु |
| सौख्यम् | सुख |
| किम् | के |
| नित्यम् | सधैँ |
| अरोगिता | निरोगी हुनु |
| स्नेहः | प्रेम |
| सद्भावः | सबै प्राणीमा समान दृष्टि राख्नु |
| पाण्डित्यम् | विद्वत्ता |
| परिच्छेदः | ठिक र बेठिक छुट्ट्याउन सक्ने क्षमता |

७. पाठस्य पञ्चमम् अनुच्छेदं पठित्वा समुचिते उत्तरे √ चिह्नं कुरुत

(क) भरतः कस्य वचनं न स्वीकृतवान् ?

लक्ष्मणस्य ◯ रामस्य ◯

(ख) कः वनं गच्छति चेद् भरतः अपि वनं गच्छति ?

रामः ◯ दशरथः ◯

(ग) रामः कं राज्यसञ्चालनाय आदिशति ?

भरतम् ◯ लक्ष्मणम् ◯

(घ) वनवासं समाप्य कः आगमिष्यति ?

भरतः ◯ रामः ◯

(ङ) भरतस्य कथनानुसारं राज्यं कस्य अस्ति ?

लक्ष्मणस्य ◯ रामस्य ◯

(च) भरतः कस्य प्रतिनिधिः भवति ?

लक्ष्मणस्य ◯ रामस्य ◯

(छ) रामः कस्य वचनं स्वीकृतवान् ?

भरतस्य ◯ लक्ष्मणस्य ◯

८. अधस्तनम् अनुच्छेदं पठित्वा प्रश्नानाम् उत्तराणि कथयत

विल्भरः अग्रजः आसीत् । ओर्भिलः अनुजः आसीत् । तौ परस्परम् अत्यन्तं मेलनशीलौ आस्ताम् । तौ यत्किमपि कार्यं परामर्शेन एव कुरुतः स्म । तयोः द्विचक्रिकायाः आपणम् आसीत् । तौ जीर्णां द्विचक्रिकां निर्मातः स्म । तस्मिन् समये द्विचक्रिका अद्भुता भवति स्म । द्विचक्रिकायाः अग्रचक्रं विशालं भवति स्म । पृष्ठचक्रं च लघु भवति स्म । तौ नवीनां द्विचक्रिकां निरमाताम् । तस्याः

उभे चक्रे समाने आस्ताम् । तेन तौ उत्साहितौ अभवताम् । एकदा तौ आकाशे अपश्यताम्। आकाशे पक्षी उड्डीयमानः आसीत्। तौ अपि उड्डयितुम् ऐच्छताम्। तौ वायुयानस्य निर्माणम् आरभेताम्। तौ वारं वारम् असफलौ अभवताम्। जनाः देवदूतं कथयित्वा तयोः उपहासम् अकुर्वन्। तथापि तौ प्रयासं न अत्यजताम्। निरन्तरं प्रयासेन तौ सफलौ अभवताम्। तौ वायुयानस्य निर्माणम् अकुरुताम्। तौ अमेरिकादेशस्य राष्ट्रपतितः पुरस्कारम् अपि अलभेताम्। अद्य जनाः वायुयानेन चलन्ति। दूरम् अपि शीघ्रं गच्छन्ति। एतत् तयोः प्रयासेन एव सम्भूतम् अस्ति।

विल्भर दाजु थिए। ओर्भिल भाइ थिए। ती दुई अत्यन्त मिलनसार थिए। ती दुई जे कार्य पनि परस्पर सल्लाह गरेर गर्थे। ती दुईको साइकल पसल थियो। ती दुई बिग्रिएको साइकल बनाउँथे। त्यो समय साइकल अचम्मको हुन्थ्यो। साइकलको अगाडिको पाङ्गो ठुलो हुन्थ्यो। पछाडिको पाङ्गो सानो हुन्थ्यो। ती दुई दाजुभाइले नयाँ साइकल बनाए। त्यसका दुवै पाङ्ग्रा बराबर थिए। त्यसबाट उनीहरू उत्साहित भए। एक दिन ती दुईले आकाशमा हेरे। आकाशमा चरा उडिरहेको थियो। ती दुईलाई पनि उड्न मन लाग्यो। ती दुईले हवाईजहाज बनाउन सुरु गरे। ती दुई पटक पटक असफल भए। मानिसहरूले देवदूत भनी ती दुईको उपहास गरे। त्यही पनि ती दुईले प्रयास छाडेनन्। निरन्तरको प्रयासले ती दुई सफल भए। ती दुईले हवाईजहाजको निर्माण गरे। ती दुईले अमेरिकाको राष्ट्रपतिबाट पुरस्कार पनि पाए। आज मानिसहरू हवाइजहाजद्वारा ओहोर–दोहोर गर्छन्। टाढा पनि छिटै जान्छन्। यो ती दुईकै प्रयासबाट सम्भव भएको हो।

(क) कः अनुजः आसीत् ?

(ख) विल्भर–ओर्भिलयोः कस्याः आपणम् आसीत् ?

(ग) तस्मिन् समये द्विचक्रिकायाः पृष्ठचक्रं कीदृशं भवति स्म ?

(घ) विल्भर–ओर्भिलाभ्यां निर्मितायाः द्विचक्रिकायाः चक्रे कीदृशे आस्ताम् ?

(ङ) कौ उड्डयितुम् ऐच्छताम् ?

(च) विल्भर–ओर्भिलौ कस्य निर्माणम् आरभेताम् ?

(छ) जनाः किं कथयित्वा विल्भर–ओर्भिलयोः उपहासम् अकुर्वन् ?

(ज) कथं विल्भर–ओर्भिलौ सफलौ अभवताम् ?

(झ) विल्भर–ओर्भिलौ कस्मात् पुरस्कारम् अलभेताम् ?

## लेखनम्

१. शिक्षकात् श्रुत्वा अधस्तनानां पदानाम् अभ्यासपुस्तिकायां शुद्धतया पुनर्लेखनं कुरुत

तिस्रः, कौशल्या, शत्रुघ्नस्य, राज्याभिषेकम्, विदेशेभ्यः, अन्वगच्छताम्, याचिष्यामि, प्रतिज्ञातौ, प्रतिनिधिः, सिंहासने, त्वादृशेन।

२. अधस्तनानि पदानि शुद्धानि कृत्वा लिखत

असक्नोत्, बोधइत्वा, आहुतवती, दुखेन, अन्त्येष्टीम्, अतुलनियम्, स्थीतवान्, शम्मान्यः, स्विकृतवान्, शिरषि, अश्रुणि, षुखिनः।

३. अधस्तनानां पदानाम् अर्थं लिखत

प्रत्यावर्तयितुम्, आसीत्, कुटीरम्, करोषि, स्वीकृत्य, आगमिष्यामि, अधुना, उरसि, प्रशंसन्ति।

४. पाठस्य तृतीयस्य अनुच्छेदस्य श्रुतलेखनं कुरुत।

५. अधस्तनं श्लोकं तस्य भावार्थं च पठित्वा प्रदत्तान् प्रश्नान् उत्तरयत

अयं निजः परो वेति गणना लघुचेतसाम्।
उदारचरितानां तु वसुधैव कुटुम्बकम्॥

भावार्थः – स्वार्थिनां चित्तं लघु भवति। ते कञ्चिद् आत्मीयं कथयन्ति, कञ्चित् परकीयं कथयन्ति। महात्मनां चित्तम् उदारं भवति। ते स्वार्थं त्यजन्ति। ते पृथिव्यां स्थितान् सर्वान् आत्मीयान् कथयन्ति। ते कम् अपि परकीयं न मानयन्ति।

> स्वार्थीहरूको चित्त सानो हुन्छ। तिनीहरू कसैलाई आफन्त भन्छन् भने कसैलाई पराई भन्छन्। महात्माहरूको चित्त उदार हुन्छ। उनीहरू स्वार्थ त्याग्छन्। तिनीहरू सबैलाई आफन्त ठान्छन्। तिनीहरू कसैलाई पनि पराइ ठान्दैनन्।

(क) केषां चित्तं लघु भवति ?

(ख) महात्मनां चित्तं कीदृशं भवति ?

(ग) महात्मानः किं त्यजन्ति ?

(घ) महात्मानः कान् आत्मीयान् कथयन्ति ?

६. पाठस्य षष्ठम् अनुच्छेदं पठित्वा प्रदत्तानि कार्याणि कुरुत

(क) एकपदेन उत्तरयत

(अ) भरतः कुत्र न अगच्छत् ?

(आ) भरतः कम् अनमत् ?

(इ) कस्य वनवाससमयः समाप्तः अभवत् ?

(इ) रामः कस्य वचनं स्वीकृतवान् ?

(ख) पूर्णवाक्येन उत्तरयत

(अ) भरतः किम् अयाचत् ?

(आ) भरतः कुतः राज्यसञ्चालनम् अकरोत् ?

(इ) कति वर्षाणि व्यत्यगच्छन् ?

(ई) भरतः पादुके कस्मै समर्पितवान् ?

(ग) भाषिककार्यं कुरुत

(अ) "अयाचत" इत्यस्य कालः कः ?

(आ) "पादुके" इत्यस्य वचनं किम् ?

(इ) "असि" इत्यस्य पुरुषः कः ?

(ई) "रामाय" इत्यस्य विभक्तिः का ?

७. अनुच्छेदस्य रेखाङ्कितानां पदानां पर्यायशब्दाः कोष्ठके प्रदत्ताः सन्ति । तैः पदैः रेखाङ्कितानि पदानि प्रतिष्ठाप्य अनुच्छेदं पूरयत

| | | | | | |
|---|---|---|---|---|---|
| नृपम् | अतीव | जनताः | अरण्यम् | विधातुम् | वाञ्छति |
| स्नेहः | अपि | वाञ्छाम् | अन्त्यकर्म | अजायत | ज्येष्ठभ्रातुः |
| जनकस्य | काले | कष्टेन | पीडितः | अजहात् | च |

रामस्य वनगमनेन दशरथः अत्यन्तं दुःखितः अभवत् । सः तेन एव दुःखेन प्राणम् अत्यजत् । भरतः तस्मिन् समये मातुलगृहं गतवान् आसीत् । सः अयोध्याम् आगच्छत् । पितुः प्राणत्यागेन अग्रजस्य वनगमनेन च सः दुःखितः अभवत् । प्रथमं सः पितुः अन्त्येष्टिम् अकरोत् । सः प्रजानाम् इच्छां ज्ञातवान् आसीत् । अग्रजे च तस्य प्रेम अतुलनीयम् आसीत् । अतः सः रामं प्रत्यावर्तयितुम् इच्छति स्म । सः रामम् एव राजानं कर्तुम् इच्छति स्म । तेन सः अपि वनम् अगच्छत् । कतिचित् जनाः अपि तम् अन्वगच्छन् ।

८. अनुच्छेदं पठित्वा अधस्तनानि कार्याणि कुरुत

रावणः अभिमानी आसीत् । सः आत्मानं बलिष्ठतमं मानयति स्म । सः सर्वान् पीडयति स्म । सः लङ्कायाः स्वामी आसीत् । सः सीतायाः अपि अपहरणम् अकरोत् । रामस्य रावणेन सह युद्धम् अभवत् । लक्ष्मणः रामस्य सहयोगम् अकरोत् । वानराः अपि रामस्य सहयोगम् अकुर्वन् । रामः रावणम् अजयत् । सीतारामयोः संयोगः अभवत् । लक्ष्मणः लङ्काम् अपश्यत् । लङ्का स्वर्णमयी आसीत् । लक्ष्मणः अयोध्याम् अस्मरत् । लङ्का अत्यन्तं समृद्धं राज्यम् असीत् । सः रामस्य समीपम् अगच्छत् । सः अकथयत्– "भो अग्रज ! अयोध्यातः लङ्का समृद्धा अस्ति । लङ्का स्वर्णमयी वर्तते । अत्र सुखस्य साधनानि बहूनि सन्ति । अत्र ये तिष्ठन्ति, ते सुखं प्राप्नुवन्ति । अयोध्यायां तथाविधं सैविध्यं नास्ति । अतः आवाम् अत्र एव तिष्ठाव । भरतः अयोध्यायाः राजा भवतु । भवान् लङ्कायाः राजा भवतु । अहं भवतः सहयोगी भूत्वा अत्र एव तिष्ठामि ।" लक्ष्मणस्य वचनं श्रुत्वा रामः अकथयत्– "हे अनुज ! तव कथनं समीचीनम् अस्ति । अयोध्यातः लङ्का सम्पन्ना अस्ति । अत्र सुखस्य

साधनानि अपि बहूनि सन्ति । परम् अयोध्या अस्माकं जन्मभूमिः अस्ति । जन्मभूमौ यत् सुखं भवति, तत् स्वर्गे अपि न भवति । जन्मभूमिः स्वर्गाद् अपि श्रेष्ठा भवति । अहं स्वर्गम् अपि त्यक्त्वा अयोध्यायां स्थातुम् इच्छामि । अतः अहं लङ्कायां कथम् अपि न तिष्ठामि ।

अपि स्वर्णमयी लङ्का न मे लक्ष्मण ! रोचते ।
जननी जन्मभूमिश्च स्वर्गादपि गरीयसी ॥

रामस्य वचनं श्रुत्वा लक्ष्मणः तूष्णीम् अभवत् ।

रावण घमन्डी थियो । ऊ आफूलाई सबैभन्दा बलियो ठान्थ्यो । ऊ सबैलाई दुःख दिन्थ्यो । त्यो लङ्काको राजा थियो । उसले सीतालाई पनि अपहरण गऱ्यो । रामको रावणसँग युद्ध भयो । लक्ष्मणले रामलाई सहयोग गरे । वानरहरूले पनि रामलाई सहयोग गरे । रामले रावणलाई जिते । सीता र रामको भेट भयो । लक्ष्मणले लङ्कालाई हेरे । लङ्का सुनैसुनको थियो । लक्ष्मणले अयोध्या सम्झिए । अयोध्या लङ्काभन्दा राम्रो थिएन । उनी रामको नजिक गए । उनले भने– "हे दाजु ! लङ्का अत्यन्त समृद्ध छ । लङ्का सुनैसुनको छ । यहाँ सुखका साधनहरू बढी छन् । यहाँ जो बस्छ, त्यसले सुख पाउँछ । अयोध्यामा त्यस्तो सुविधा छैन । त्यसकारण हामी यहीँ बसौँ । भरत अयोध्याका राजा बनून् । तपाईं लङ्काको राजा बन्नुहोस् । म तपाईंको सहयोगी बनेर यहीँ बस्छु ।" लक्ष्मणको कुरा सुनेर रामले भने– "हे भाइ ! तिम्रो कुरा ठिकै हो । अयोध्याभन्दा लङ्का सम्पन्न छ । यहाँ सुखका साधनहरू पनि धेरै छन् । तर अयोध्या हाम्रो जन्मभूमि हो । जन्मभूमिमा जुन सुख प्राप्त हुन्छ, त्यो सुख स्वर्गमा पनि पाइँदैन । जन्मभूमि स्वर्गभन्दा पनि श्रेष्ठ हुन्छ । म स्वर्ग छोडेर पनि अयोध्यामा बस्न चाहन्छु । त्यसैले म कुनै पनि हालतमा लङ्कामा बस्दिनँ ।" रामको कुरा सुनेर लक्ष्मण चुप लागे ।

(क) एकपदेन उत्तरयत

(अ) रावणः कीदृशः आसीत् ?

(आ) रावणः कस्याः अपहरणम् अकरोत् ?

(इ) लङ्का कीदृशी आसीत् ?

(ई) लक्ष्मणस्य विचारे कः लङ्कायाः राजा भवतु ?

(उ) का स्वर्गाद् अपि श्रेष्ठा भवति ?

(ख) पूर्णवाक्येन उत्तरयत

(अ) रावणः आत्मानं कीदृशं मानयति स्म ?

(आ) के रामस्य सहयोगम् अकुर्वन् ?

(ई) का रामस्य जन्मभूमिः अस्ति ?

(उ) रामः स्वर्गं त्यक्त्वा कुत्र स्थातुम् इच्छति ?

(ग) भाषिककार्यं कुरुत

(अ) "सर्वान्" इत्यस्य विभक्तिः का ?

(आ) "अपि" इत्यस्य प्रयोगं कृत्वा एकं वाक्यं लिखत।

(इ) "अजयत्" इत्यस्य कालः कः ?

(ई) "सन्ति" इत्यस्य वचनं किम् ?

(उ) "इच्छामि" इत्यस्य पुरुषः कः ?

(घ) अस्माकं देशस्य राष्ट्रियचिह्ने किं लिखितं भवति ? तस्य अर्थः कः ? शिक्षकस्य साहाय्येन लिखत।



९. कस्य माता का ? परस्परं मेलयत

| | |
|---|---|
| रामस्य | सुमित्रा |
| भरतस्य | मन्थरा |
| लक्ष्मणस्य | कौशल्या |
| शत्रुघ्नस्य | कैकयी |
| | सुमित्रा |

## १०. अधस्तनान् प्रश्नान् उत्तरयत

(क) भ्रातरः कस्य आज्ञां पालयन्ति स्म ?

(ख) का कैकय्याः दासी आसीत् ?

(ग) कैकयी कौ वरौ याचितवती ?

(घ) कस्य मनसि महती चिन्ता अभवत् ?

(ङ) भरतः केन कारणेन दुःखितः अभवत् ?

(च) भरतः कं राजानं कर्तुम् इच्छति स्म ?

(छ) भरतः रामं किम् अश्रावयत् ?

(ज) किं शिरसि कृत्वा भरतः चित्रकूटाद् अगच्छत् ?

(झ) भरतः सिंहासने किम् अस्थापयत् ?

(ञ) भरतः पादुके रामाय समर्प्य किम् अकथयत् ?

# व्याकरणानुशीलनम्

## १. शिक्षकसाहाय्येन सन्धिनियमान् पठत

**जश्त्वसन्धिनियमाः**

क्/ख्/घ् + अण् (परः)/झश् = ग्

यथा– दघ् + धः = दग् + धः = दग्धः

च्/छ्/झ् + अण् (परः)/झश् = ज्

यथा– अच् + अन्तः = अज् + अन्तः = अजन्तः

ट्/ठ्/ढ् + अण् (परः)/झश् = ड्

यथा– वषट् + अस्तु = वषड् + अस्तु = वषडस्तु

त्/थ्/ध् + अण् (परः)/झश् = द्

यथा– जगत् + ईशः = जगद् + ईशः = जगदीशः

प्/फ्/भ् + अण् (परः)/झश् = ब्

यथा– लभ् + धः = लब् + धः = लब्धः

१. सन्धिं कुरुत

| | | | |
|---|---|---|---|
| (क) | सत् + आचारः | | |
| (ख) | बुध् + धिः | | |
| (ग) | अच् + आदिः | | |
| (घ) | वाक् + ईशः | | |
| (ङ) | प्रावृट् + एषा | | |
| (च) | अप् + जः | | |
| (छ) | ऋध् + धिः | | |
| (ज) | क्षुभ् + धः | | |
| (झ) | दिक् + बन्धनम् | | |
| (ञ) | तत् + दिव्यम् | | |

२. पाठात् पञ्च जश्त्वसन्धिस्थलानि अन्विष्य सन्धिं कृत्वा लिखत।

३. सन्धिं कृत्वा वाक्यानां पुनर्लेखनं कुरुत

(क) तत् उपवनम् अस्ति।

(ख) अधुना प्रावृट् अस्ति।

(ग) हल्वर्णाः अच्–वर्णेन सह उच्चार्यन्ते।

(घ) सरित् वहन्ती अस्ति।

(ङ) अच् एकाकी उच्चार्यते।

(च) नदी हिमालयात् उत्–गच्छति।

(छ) तव मधुरा वाक् अस्ति।

(ज) आकाशात् अम्बु वर्षति।

(झ) छात्राः गृहात् आगच्छन्ति।

(ञ) विजेत्रा स्रक् धारणीया।

४. उदाहरणं दृष्ट्वा चतुर्थीविभक्तेः रूपं तस्य अर्थं च कथयत

| प्रथमायां रूपम् | चतुर्थ्यां रूपम् | अर्थः |
|---|---|---|
| वृषः | वृषाय | गोरुलाई/गोरुका लागि |
| भरतः | | |
| लक्ष्मणः | | |
| शत्रुघ्नः | | |
| दशरथः | | |
| अग्रजः | | |

५. उदाहरणानि पठित्वा प्रदत्तानां शब्दानां चतुर्थीविभक्तौ रूपाणि कथयत

उदाहरणानि

| शब्दः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| हंस | हंसाय | हंसाभ्याम् | हंसेभ्यः |
| रमा | रमायै | रमाभ्याम् | रमाभ्यः |
| जननी | जनन्यै | जननीभ्याम् | जननीभ्यः |

अभ्यासशब्दाः

| शब्दः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| अनुज | | | |
| भगिनी | | | |
| गङ्गा | | | |
| मेघ | | | |
| नदी | | | |
| तारा | | | |

## ६. उदाहरणानुसारेण कोष्ठस्थसङ्केतम् अनुसृत्य रिक्तस्थानं पूरयत

उदाहरणानि

(क) अग्रजः .......... पुस्तकं ददाति। (भगिनी–चतुर्थी–एकवचनम्)

अग्रजः भगिन्यै पुस्तकं ददाति।

(ख) सरस्वती ......... ज्ञानं ददाति। (छात्र–चतुर्थी–बहुवचनम्)

सरस्वती छात्रेभ्यः ज्ञानं ददाति।

(ग) नीतीशः ........ घासं ददाति। (अजा–चतुर्थी–द्विवचनम्)

नीतीशः अजाभ्यां घासं ददाति।

अभ्यासवाक्यानि

(क) अहं ........... मिष्टान्नं ददामि। (मित्र–चतुर्थी–द्विवचनम्)

(ख) मातुलः ........... उपहारं ददाति। (भागिनेया–चतुर्थी–एकवचनम्)

(ग) वयं .......... फलं दद्मः। (जननी–चतुर्थी–एकवचनम्)

(घ) परोपकारिणः .......... वस्त्रं ददति। (निर्धन–चतुर्थी–बहुवचनम्)

(ङ) पिता ....... दक्षिणां ददाति। (पुत्री–चतुर्थी–द्विवचनम्)

(च) प्रधानमन्त्री ......... सुविधां ददाति। (जनता–चतुर्थी–बहुवचनम्)

(छ) नरेशः .......... मोदकं ददाति। (बालिका–चतुर्थी–एकवचनम्)

(ज) जननी ......... आशीर्वादं ददाति। (पुत्र–चतुर्थी–बहुवचनम्)

(झ) भगिनी ........ वस्त्रं ददाति। (जननी–चतुर्थी–एकवचनम्)

(ञ) प्रहरी ......... दण्डं ददाति। (चौर –चतुर्थी–बहुवचनम्)

७. अधः पुंलिङ्गे "अश्व" शब्दस्य, नपुंसकलिङ्गे "फल" शब्दस्य च रूपाणि प्रदत्तानि सन्ति। उभयोः शब्दयोः रूपाणां मौनपठनं कृत्वा तयोः शब्दयोः कस्यां कस्यां विभक्तौ रूपाणि भिन्नानि भवन्ति ? कस्यां कस्यां विभक्तौ च समानानि भवन्ति ? कथयत।

| अश्व | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | अश्वः | अश्वौ | अश्वाः |
| द्वितीया | अश्वम् | अश्वौ | अश्वान् |
| तृतीया | अश्वेन | अश्वाभ्याम् | अश्वैः |
| चतुर्थी | अश्वाय | अश्वाभ्याम् | अश्वेभ्यः |
| पञ्चमी | अश्वात् | अश्वाभ्याम् | अश्वेभ्यः |
| षष्ठी | अश्वस्य | अश्वयोः | अश्वानाम् |
| सप्तमी | अश्वे | अश्वयोः | अश्वेषु |
| सम्बोधनम् | हे अश्व | हे अश्वौ | हे अश्वाः |

| फल | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | फलम् | फले | फलानि |
| द्वितीया | फलम् | फले | फलानि |
| तृतीया | फलेन | फलाभ्याम् | फलैः |
| चतुर्थी | फलाय | फलाभ्याम् | फलेभ्यः |
| पञ्चमी | फलात् | फलाभ्याम् | फलेभ्यः |
| षष्ठी | फलस्य | फलयोः | फलानाम् |
| सप्तमी | फले | फलयोः | फलेषु |
| सम्बोधनम् | हे फल | हे फले | हे फलानि |

## ८. अधस्तनानां शब्दानां फलशब्दस्य इव रूपाणि लिखित्वा सारिणीं पूरयत

(क)

| धन | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | धनम् | ........... | ........... |
| द्वितीया | ........... | ........... | ........... |
| तृतीया | ........... | ........... | धनैः |
| चतुर्थी | ........... | ........... | ........... |
| पञ्चमी | ........... | धनाभ्याम् | ........... |
| षष्ठी | ........... | ........... | ........... |
| सप्तमी | धने | ........... | ........... |
| सम्बोधनम् | ........... | ........... | हे धनानि |

(ख)

| मुख | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | ........... | मुखे | ........... |
| द्वितीया | ........... | ........... | ........... |
| तृतीया | मुखेन | ........... | ........... |
| चतुर्थी | ........... | ........... | ........... |
| पञ्चमी | ........... | मुखाभ्याम् | ........... |
| षष्ठी | ........... | ........... | |
| सप्तमी | ........... | ........... | मुखेषु |
| सम्बोधनम् | ........... | ........... | ........... |

(ग)

| गृह | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | ........... | ........... | ........... |
| द्वितीया | ........... | गृहे | ........... |
| तृतीया | ........... | ........... | ........... |
| चतुर्थी | गृहाय | ........... | ........... |
| पञ्चमी | ........... | ........... | ........... |
| षष्ठी | ........... | ........... | गृहाणाम् |
| सप्तमी | ........... | ........... | ........... |
| सम्बोधनम् | हे गृह | ........... | ........... |

(घ)

| ज्ञान | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | ........... | ........... | ........... |
| द्वितीया | ........... | ज्ञाने | ........... |
| तृतीया | ........... | ........... | ........... |
| चतुर्थी | ज्ञानाय | ........... | ........... |
| पञ्चमी | ........... | ........... | ........... |
| षष्ठी | ........... | ........... | ज्ञानानाम् |
| सप्तमी | ........... | ........... | ........... |
| सम्बोधनम् | हे ज्ञान | ........... | ........... |

९. उदाहरणानुसारेण सङ्केतम् अनुसृत्य रूपाणि लिखत

| सङ्केतः | | रूपम् |
|---|---|---|
| उदाहरणम् | पत्र–द्वितीया–बहुवचनम् | पत्राणि |
| (क) | वस्त्र–चतुर्थी–बहुवचनम् | |
| (ख) | रूप्यक–षष्ठी–एकवचनम् | |
| (ग) | पुस्तक–सप्तमी–द्विवचनम् | |
| (घ) | उद्यान–पञ्चमी–बहुवचनम् | |
| (ङ) | पुष्प–तृतीया–एकवचनम् | |
| (च) | शिरस्त्र–प्रथमा–द्विवचनम् | |
| (छ) | नेत्र–द्वितीया–बहुवचनम् | |
| (ज) | मित्र–चतुर्थी–एकवचनम् | |
| (झ) | अङ्क–षष्ठी–द्विवचनम् | |
| (ञ) | चित्त–सप्तमी–बहुवचनम् | |
| (ट) | आम्र–पञ्चमी–एकवचनम् | |
| (ठ) | नारङ्ग–तृतीया–द्विवचनम् | |
| (ड) | स्यूत–प्रथमा–बहुवचनम् | |
| (ढ) | सरोवर–द्वितीया–एकवचनम् | |
| (ण) | शकट–चतुर्थी–द्विवचनम् | |

## रचनात्मकः अभ्यासः

१. काञ्चित् पौराणिकीं कथाम् अभिभावकेभ्यः श्रुत्वा स्वभाषया कक्षायां श्रावयत, तत्सन्देशं च कथयत।

२. तव परिवारे कति सदस्याः सन्ति ? ते किं किं कुर्वन्ति ? प्रतिजनम् एकवाक्यं लिखित्वा कक्षायां श्रावयत।

३. एकं विकल्पं चिनुत

(क) त्वम् अग्रजस्य अग्रजायाश्च सम्मानं करोषि न वा ?

(अ) करोमि (आ) न करोमि।

(ख) त्वम् अनुजे अनुजायां वा स्नेहं करोषि न वा ?

(अ) करोमि (आ) न करोमि।

(ग) त्वं मातापितरौ नमसि न वा ?

(अ) नमामि (आ) न नमामि।

(घ) तव मातापितरौ त्वयि स्नेहं कुरुतः न वा ?

(अ) कुरुतः (आ) न कुरुतः।

(ङ) तव अग्रजाः त्वयि स्नेहं कुर्वन्ति न वा ?

(अ) कुर्वन्ति (आ) न कुर्वन्ति।

(च) तव अनुजाः तव सम्मानं कुर्वन्ति न वा ?

(अ) कुर्वन्ति (आ) न कुर्वन्ति।

## श्रवणपाठः

पाण्डवाः पञ्च आसन् । युधिष्ठिरः, भीमः, अर्जुनश्च कुन्तीपुत्राः आसन् । नकुलः, सहदेवश्च माद्रीपुत्रौ आस्ताम् । पाण्डवेषु युधिष्ठिरः ज्येष्ठः आसीत् । अतः अन्ये चत्वारः युधिष्ठिरं सम्मानयन्ति स्म । ते कदापि युधिष्ठिरस्य आज्ञां न उल्लङ्घयन्ति स्म । युधिष्ठिरः अपि भ्रातृषु अतीव स्नेहं करोति स्म । ते पञ्च एव सदा धर्ममार्गेण चलन्ति स्म । कदाचित् पाण्डवाः वनवासे आसन् । एकदा यात्रायां युधिष्ठिरः पिपासितः अभवत् । युधिष्ठिरः सहदेवं जलम् आनेतुम् आदिशत् । सहदेवः एकस्मिन् सरोवरे अगच्छत् । सः पात्रेण जलं निष्कासयितुम् आरभत । एकः अदृष्टः यक्षः अकथयत्– "पूर्वं मम प्रश्नस्य उत्तरं देहि । ततः जलं नय ।" सहदेवः शीघ्रं जलं नेतुम् इच्छति स्म । अतः सः यक्षस्य वचनं तिरस्कृतवान् । सः तत्र एव निर्जीवः अभवत् । विलम्बस्य कारणेन युधिष्ठिरः नकुलं प्रेषितवान् । नकुलः अपि तथैव निर्जीवः अभवत् । पुनः अर्जुनः अगच्छत् । सः अपि निर्जीवः अभवत् । तत्पश्चात् भीमः अगच्छत् । सः अपि निर्जीवः अभवत् । ततः युधिष्ठिरः स्वयं सरोवरम् अगच्छत् । अनुजान् दृष्ट्वा सः दुःखितः अभवत् । यक्षः युधिष्ठिरम् अपि तथैव अकथयत्– "पूर्वं मम प्रश्नस्य उत्तरं देहि । ततः जलं नय ।" दुःखितः अपि युधिष्ठिरः तत्परः अभवत् । यक्षः अनेकान् प्रश्नान् अपृच्छत् । युधिष्ठिरः सर्वेषां सतर्कं समुचितम् उत्तरम् अददात् । प्रसन्नः यक्षः अकथयत्– "तव उत्तरेण अहं प्रसन्नः अस्मि । तव एकं भ्रातरम् अहं जीवयामि । वद कं जीवयानि ?" युधिष्ठिरः अकथयत्– "नकुलं जीवयतु ।" यक्षः अकथयत्– "किमर्थम् ?" युधिष्ठिरः अकथयत्– "मम द्वे मातरौ स्तः । अहं कौन्तेयः जीवितः अस्मि । अतः एकः माद्रेयः जीवितः भवतु । एतद् एव धर्मेण उचितं भवति ।" युधिष्ठिरस्य वचनेन यक्षः अत्यन्तं प्रसन्नः अभवत् । सः तान् सर्वान् अजीवयत् ।

७. श्चुत्वसन्धियुतान् शब्दान् पृथक्कृत्य अभ्यासपुस्तिकायां लिखत

रामश्चिनोति, जगदीशः, सच्चित्, उत्पत्तिः, कश्चन, अरीञ्जहि ।

## रचनात्मकः अभ्यासः

१. पूर्वं श्रुतां काञ्चन कथां कक्षायां श्रावयत ।

२. अधस्तनं चित्रं दृष्ट्वा रिक्तस्थानानि पूरयत



एषः सुन्दरः ............ अस्ति । ग्रामे .......... कृषिक्षेत्रम् अस्ति । क्षेत्रे .......... सन्ति । महिलाः कार्यं .......... । क्षेत्रे ......... धान्यं फलति । क्षेत्रस्य समीपे ........ वृक्षाः सन्ति । दूरे एकं ......... अस्ति ।

विशालम्, ग्रामः, कुर्वन्ति, महिलाः, बहु, हरिताः, वनम्

**श्रवणपाठः**

सताम् आचारः सदाचारः भवति । सदाचारी मनुष्यः कीर्तिं लभते । सः भूतिं च लभते । सदाचारी जनः मातुः पितुः गुरोः च आदरं करोति । सः ज्येष्ठानाम् आज्ञां पालयति । ज्येष्ठान् सेवते । सदाचारी जनः जीवानाम् उपकारं करोति । सदाचारेण मनुष्यः सफलः भवति । अतः सदाचारः उन्नतेः द्वारम् अस्ति । सदाचारिणः जनाः मधुरं वदन्ति । ते हितम् उपदिशन्ति । सदाचारी मनुष्यः सर्वत्र पूजितः भवति । जनाः सदाचारिणं जनम् अनुकुर्वन्ति । तस्य आचारं पश्यन्ति । स्वयम् अपि तथा कर्तुं यतन्ते । सदाचारेण एव श्रीरामः पूजितः अस्ति । सदाचारेण एव बुद्धः अद्यापि पूज्यते । सदाचारिणां जनानां सर्वदा आदरः भवति । वयम् अपि सदाचारस्य पालनं कुर्मः । सज्जनाः भविष्यामः ।

नवमः पाठः

# गीतोपदेशः

## पाठप्रवेशः गीतोपदेशः



संसारे सर्वेषां निजं कर्तव्यं भवति। निजं कार्यम् एव कर्तव्यम् अस्ति। पृथिवी सदैव अन्नफलादिकम् उत्पादयति। अन्नफलादिकं च जीवानां क्षुधां निवारयति। जलं पिपासां शमयति। सूर्यः संसारं प्रकाशयति। वायुः जीवानां प्राणरूपः अस्ति। आकाशः तु सर्वत्र व्यापकः अस्ति। आकाशं विना कश्चन अपि व्यवहारः न सम्भवति।

अन्येषां सर्वेषाम् अपि स्वकीयं कर्तव्यं भवति। विद्यार्थिनां कर्तव्यं सम्यक् पठनम् अस्ति। गुरोः कर्तव्यं सम्यक् पाठनम् अस्ति। मातापित्रोः कर्तव्यं सन्ततीनां पालनं पोषणं च अस्ति। मातापित्रोः शुश्रूषा सन्ततीनां कर्तव्यम् अस्ति। अग्रजः स्वकीयं कर्तव्यं न पालयति चेत् अनुजः अपि न पालयति। अत एव श्रीकृष्णः श्रीमद्भगवद्गीतायाम् कथयति–

यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥

**सरलार्थः**

श्रेष्ठः जनः यद् यद् आचरति, सामान्यः जनः तत् तत् एव आचरति। श्रेष्ठः यत् प्रमाणं कुरुते, अन्यः लोकः तत् एव अनुचरति।

संसारमा सबैको आफ्नो कर्तव्य हुन्छ। आफ्नो काम नै कर्तव्य हो। पृथ्वीले सधैँ अन्न फल आदि फलाउँछ। अन्न र फलले प्राणीहरूको भोक मेटाउँछ। पानीले तिर्खा मेटाउँछ। सूर्यले संसारलाई उज्यालो बनाउँछ। वायु प्राणीहरूको प्राण हो। आकाश सबैतिर फैलिएको छ। आकाशविना कुनै पनि व्यवहार सम्भव हुँदैन।

अरू सबैको पनि आफ्नो कर्तव्य हुन्छ। विद्यार्थीको कर्तव्य राम्रोसँग पढ्नु हो। गुरुको कर्तव्य राम्रोसँग पढाउनु हो। आमाबुबाको कर्तव्य सन्तानको पालन पोषण गर्नु हो। आमाबुबाको सेवा गर्नु सन्तानको कर्तव्य हो। यदि कुनै मान्यजनले नै आफ्नो कर्तव्य पालना नगर्ने हो भने अरू सबैले त्यसैको सिको गर्छन्। त्यसैले भगवान् श्रीकृष्णले गीतामा अर्जुनलाई आफ्नो कर्तव्य सम्झाउँदै भन्नुभएको छ–

मान्यजनले जुन जुन आचरण गर्दछ, अरू सामान्य व्यक्तिले पनि त्यस्तै गर्दछन्। उसले जसलाई प्रामाणिक मान्दछ, अरूले पनि त्यसैलाई पछ्याउँछन्।

**मूलपाठः** **गीतोपदेशः**

१. उद्धरेदात्मनात्मानं नात्मानमवसादयेत्।

आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः॥

२. त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः।

कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत्॥

३. युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु।

युक्तस्वप्नावबोधस्य योगो भवति दुःखहा॥

४. जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च।

तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि॥

५. व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन।

बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम्॥

## प्रथमं पद्यम्

अन्वयः

आत्मना आत्मानम् उद्धरेत्। आत्मानं न अवसादयेत्। आत्मा एव आत्मनः बन्धुः (अस्ति)। आत्मा एव आत्मनः रिपुः (अस्ति)।

सरलार्थः

जनः स्वयम् एव स्वस्य हितं कुर्यात्। कदापि स्वस्य अवहेलनं न कुर्यात्। जनः स्वयमेव स्वजनः अस्ति। सः स्वयमेव स्वस्य शत्रुश्च वर्तते।

व्यक्तिले आफैँले आफ्नो कल्याण गर्नुपर्छ। आफूलाई कहिले पनि तल पार्नुहुँदैन। व्यक्ति आफैँ आफ्नो मित्र हो र आफैँ आफ्नो शत्रु हो।

## द्वितीयं पद्यम्

अन्वयः

कामः क्रोधः तथा लोभः (इति) इदं त्रिविधं आत्मनः नाशनम्, नरकस्य द्वारम् (च) अस्ति। तस्मात् एतत् त्रयं त्यजेत्।

सरलार्थः

कामस्य, क्रोधस्य लोभस्य च कारणेन स्वस्य हानिः भवति। जनाः एतस्य कारणाद् दुःखरूपं नरकं प्राप्नुवन्ति। अतः कामः न कर्तव्यः, क्रोधः न कर्तव्यः। लोभश्च न कर्तव्यः।

| |
|---|
| काम (विषयवस्तुप्रतिको आसक्ति), क्रोध र लोभ आफूलाई हानि गर्ने र सिधै दुःखैदुःख भोग्नुपर्ने नरकका ढोका हुन्, त्यसैले यी तीनैलाई त्यागिदिनुपर्छ। |

## तृतीयं पद्यम्

अन्वयः

युक्ताहारविहारस्य कर्मसु युक्तचेष्टस्य युक्तस्वप्नावबोधस्य योगः दुःखहा भवति।

सरलार्थः

यः पथ्यम् आहारं करोति, यथोचितं विहारं करोति, कर्मसु मनोयोगपूर्वकं संलग्नः भवति, यथासमयं स्वपिति, यथासमयं च जागर्ति, तस्य योगः दुःखं नाशयति।

| |
|---|
| जसले नियमित सही आहार र विहार गर्दछ, जो आफ्नो काममा दत्तचित्त भएर लाग्दछ, जो सही समयमा सुत्ने र सही समयमा जाग्ने गर्दछ, त्यस्तो व्यक्तिले गरेको योगले दुःखको नाश हुन्छ। |

## चतुर्थं पद्यम्

अन्वयः

हि जातस्य मृत्युः ध्रुवः (अस्ति) मृतस्य च जन्म ध्रुवम् (भवति)। तस्मात् त्वम् अपरिहार्ये अर्थे शोचितुं न अर्हसि।

सरलार्थः

हे अर्जुन ! यस्य जन्म भवति तस्य मृत्युः अपि निश्चितः अस्ति। यः मृत्युं प्राप्नोति तस्य जन्म अपि अवश्यम्भावि वर्तते। जन्ममरणचक्रम् अपरिहार्यम् अस्ति। तस्मात् कारणात् त्वं शोकं मा कुरु।

हे अर्जुन ! जो जन्मिएको छ उसको मृत्यु निश्चित छ, जसको मृत्यु भएको छ, उसको जन्म पनि निश्चित छ। त्यसकारण अनिवार्य कुरामा तिमीले चिन्ता गर्न सुहाउँदैन।

## पञ्चमं पद्यम्

अन्वयः

हे कुरुनन्दन ! इह व्यवसायात्मिका बुद्धिः एका (एव अस्ति)। अव्यवसायिनां अनन्ताः बुद्धयः बहुशाखाश्च सन्ति।

सरलार्थः

हे अर्जुन ! कर्मयोगिषु एका एव निश्चयात्मिका बुद्धिः भवति। ये च बुद्धिहीनाः सन्ति ते स्वधर्मस्य विषये अनेके तर्कवितर्काः सन्ति।

हे अर्जुन ! परिश्रमी र कर्मठ व्यक्तिहरूसँग निर्णय गर्न सक्ने बुद्धि हुन्छ, तर यस्तो बुद्धि नभएका परिश्रम नगर्ने व्यक्तिहरूमा चाहिँ स्वधर्मका विषयमा अनेक तर्कवितर्क हुन्छन्।

### शब्दार्थाः

| मूलशब्दः | संस्कृते पर्यायः | नेपाल्याम् अर्थः | आङ्गलभाषायाम् अर्थः |
|---|---|---|---|
| अवसादयेत् | नाशयेत् | विनाशतिर लैजाओस् | Denigrate |

| | | | |
|---|---|---|---|
| युक्ताहारविहारस्य | आहारविहारयोः सन्तुलनयुक्तस्य | सन्तुलित आहार र विहार भएको | Of one who is restrained in his eating and move-ments |
| युक्तचेष्टस्य | सावधानस्य | सचेत व्यक्तिको | Of one who is moderate in his action |
| युक्तस्वप्नावबोधस्य | शयनजागरणयोः उचितसमययुक्तस्य | सुत्ने र उठ्ने उचित समय भएको | Of one who is moderate in sleep and in wakeful-ness |
| ध्रुवः | निश्चयः | अवश्य नै | Unfailing |
| अपरिहार्यः | अनिवार्य | अनिवार्य | What is un-avoidable |
| व्यवसायात्मिका | निश्चयात्मिका | निश्चयात्मक | Single deter-mination |
| अव्यवसायिनाम् | अनुद्योगिनाम् | उद्यमविहीनहरूको | Indolent |

## अभ्यासः

### श्रवणं भाषणं च

१. पाठस्थान् श्लोकान् शिक्षकात् श्रुत्वा लयपूर्वकम् अनुवाचयत ।

२. शिक्षकस्य साहाय्येन अधोलिखितपदानि शुद्धम् उच्चारयत

उद्धरेत्, ह्यात्मनः, एतत्त्रयम्, युक्ताहारविहारस्य, युक्तचेष्टस्य, युक्तस्वप्नावबोधस्य, ध्रुवम्, अपरिहार्यः, अव्यवसायिनाम् ।

३. पाठस्थं प्रथमं पद्यं लयपूर्वकं वाचयित्वा पदच्छेदं कुरुत।

४. पाठस्थं द्वितीयं श्लोकम् उच्चार्य अधस्तानां प्रश्नानाम् उत्तरं वदत

(क) नरकस्य द्वारं किम् ?

(ख) किमर्थं कामं क्रोधं लोभं च त्यजेत् ?

(ग) अस्मिन् श्लोके विसर्गस्य प्रयोगः कुत्र कुत्र अस्ति ?

(घ) अस्मिन् श्लोके अनुस्वारस्य प्रयोगः कुत्र कुत्र अस्ति ?

५. "विद्यार्थिनां कर्तव्यम्" इति विषये कक्षायां समूहान् निर्माय विमर्शं कुरुत। निष्कर्षं च कक्षायां श्रावयत।

६. पाठस्थानां श्लोकानां लयानुसारम् उच्चारणं कृत्वा शिक्षकं श्रावयत।

७. मित्रात् पाठस्य चतुर्थं श्लोकं श्रुत्वा नेपाल्यामर्थं वदत।

९. श्रवणपाठं श्रुत्वा प्रश्नान् उत्तरयत।

(अ) एकपदेन प्रश्नान् उत्तरत

(क) जीवाः कयोः माध्यमेन पश्यन्ति ?

(ख) जीवाः रसनायाः माध्यमेन किं कुर्वन्ति ?

(ग) आत्माविहीनं शरीरं किम् उच्यते ?

(घ) आत्मं किं परिवर्तयति ?

(आ) पूर्णवाक्येन प्रश्नान् उत्तरत

(क) श्रीकृष्णः गीतायां किं कथयति ?

(ख) शास्त्रानुसारं आत्मा कीदृशः वर्तते ?

(ग) बसयानं कस्य सहयोगेन चलति ?

(घ) कदा शरीरं न चलति ?

(इ) सत्यकथने (√) चिह्नं असत्यकथने च (x) चिह्नं दत्त

(क) जीवाः त्वचः माध्यमेन पश्यन्ति।

(ख) यदा आत्मा शरीरं त्यजति तदा शरीरं चलति।

(ग) आत्मा चेतनः वर्तते।

(घ) इन्द्रियाणि आत्मनः माध्यमेन कार्यं कुर्वन्ति।

## पठनम्

१. अधोलिखितां कथां सम्यक् पठत

कस्मिंश्चित् नगरे एकः जनः वसति स्म। सः निर्धनः आसीत्। सः भिक्षया जीवनं निर्वहति स्म। एकदा सः भिक्षाटनम् अकरोत्। किञ्चित् सक्तुकम् अखादत्। अवशिष्टं च सक्तुकम् घटे स्थापितवान्। कुटीरे मूषकाः आसन्। अतः स घटं खट्वायाः उपरि अस्थापयत्। शयनसमये सः सदा घटम् अवलोकयति स्म।

एकदा शयनसमये स व्यचारयत्, "अयं घटः सक्तुभिः परिपूर्णः वर्तते। अनेन रूप्यकाणां शतम् उत्पद्यते। तेन अहं अजाद्वयं क्रीणामि। प्रसववशात् ताभ्यां यूथं भविष्यति। ततः अजाभिः गाः ग्रहीष्यामि। गोभिः महिषीः, महिषीभिः च वडवाः क्रीणामि। वडवाप्रसवतः प्रभूताः अश्वा भविष्यन्ति। तेषां विक्रयात् प्रभूतं सुवर्णं भविष्यति। सुवर्णेन गृहं निर्मापयिष्यामि। ततः कश्चन मह्यं रूपवतीं कन्यां दास्यति। तत्सकाशात् मम पुत्रः भविष्यति। अहं तस्य सोमशर्मा इति नाम करिष्यामि। स शीघ्रमेव वर्धिष्यते। स धावितुं क्रीडितुं च समर्थः भविष्यति। अहं तेन सह पादकन्दुकेन क्रीडिष्यामि। तदा अहं पादकन्दुकं पादेन इत्थं प्रहरिष्यामि।"

ध्यानस्थितः सः घटे पादप्रहारं अकरोत्। घटः भग्नः सञ्जातः। तस्य शरीरे सक्तवः पतिताः। सः पाण्डुरः सञ्जातः।

कुनै सहरमा एउटा मानिस बस्थ्यो। ऊ गरिब थियो। ऊ भिक्षाटन गरेर जीवन चलाउँथ्यो। एकपटक उसले भिक्षा मागेर ल्यायो। केही सातु खायो। बाँकी रहेको सातु उसले घैँटामा राख्यो। कुटीमा मुसाहरू थिए। मुसाबाट जोगाउन उसले घैँटो

खाटमाथि झुन्ड्यायो। सुत्ने बेलामा ऊ सधैँ घैँटो हेरिहन्थ्यो।

एकदिन उसले सुत्ने बेलामा विचार गर्‍यो, "यो घैँटोभरि सातु छ। यसलाई बेचेर धेरै पैसा कमाइ हुन्छ। त्यस पैसाले म दुइटा पाठा किन्छु। तिनीहरू हुर्किनेछन्, अनि तिनीहरूले जुम्ल्याहा पाउनेछन्। तिनीहरूलाई बेचेर गाईहरू किन्ने छु। गाईहरू बेचेर भैँसी, भैँसी बेचेर घोडा किन्नेछु। बिस्तारै मसित धेरै घोडा हुनेछन्। घोडा बेचेपछि म टन्न सुन किन्नेछु। सुन बेचेर घर बनाउँनेछु। घर देखेर कसैले मलाई राम्री कन्या दिनेछ। बिहे भएपछि मेरो छोरो जन्मिनेछ। म छोराको नाम सोम शर्मा राख्नेछु। ऊ छिटै हुर्किनेछ। ऊ दौडिन र खेल्न सक्ने हुनेछ। म उससित भकुन्डो खेल्नेछु। म त्यसबेला भकुन्डोलाई यसरी हिर्काउनेछु।"

यस्तो सोच्दासोच्दै उसले घैँटोमा लात्तीले हिर्कायो। घैँटो फुटेर सातु छताछुल्ल भयो। ऊ सातुले सेतै भयो।

२. उपरि लिखितायाः कथायाः आधारेण विलुप्तानि पदानि वदत

कस्मिंश्चित् नगरे एकः जनः .......... स्म। सः निर्धनः आसीत्। सः .......... जीवनं निर्वहति स्म। एकदा सः भिक्षाटनं अकरोत्। किञ्चित् .......... अखादत्। अवशिष्टं च सक्तुकम् घटे स्थापितवान्। कुटीरे .......... आसन्। अतः सः घटं खट्वायाः उपरि ..........अस्थापयत्। शयनसमये सः सदा घटम् अवलोकयति स्म।

एकदा .......... सः व्यचारयत्, "अयं घटः सक्तुभिः .......... वर्तते। अनेन रूप्यकाणां शतम् उत्पद्यते। तेन अहं अजाद्वयं क्रीणामि। .......... ताभ्यां यूथं भविष्यति। ततः अजाभिः प्रभूताः गाः ..........। गोभिः महिषीः, .......... वडवाः क्रीणामि। वडवाप्रसवतः ..........अश्वा भविष्यन्ति। तेषां विक्रयात् प्रभूतं सुवर्णं भविष्यति। सुवर्णेन .......... निर्मापयिष्यामि। ततः .......... मां रूपवतीं कन्यां दास्यति। .......... मम पुत्रः भविष्यति। अहं तस्य .......... इति नाम करिष्यामि। सः .......... वर्धिष्यते। सः धावितुं क्रीडितुं च ..........

भविष्यति। अहं तेन सह पादकन्दुकेन ..........। तदा अहं .......... पादेन इत्थं प्रहरिष्यामि।"

ध्यानस्थितः सः घटे .......... अकरोत्। घटः भग्नः ..........। तस्य .......... सक्तवः अपतन्। सः .......... अभवत्।

३. अधस्तनं श्लोकं पठित्वा मातृभाषायाम् अर्थं वदत

उद्धरेदात्मनात्मानं नात्मानमवसादयेत्।
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः॥

४. अधस्तनस्य श्लोकस्य सरलार्थं कथयत

जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च।
तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि॥

५. अधस्तनश्लोकं पठित्वा प्रश्नान् उत्तरयत

उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीः,
दैवेन देयमिति कापुरुषा वदन्ति।
दैवं निहत्य कुरु पौरुषमात्मशक्त्या
यत्ने कृते यदि न सिद्ध्यति कोऽत्र दोषः॥

प्रश्नाः

(क) लक्ष्मीः कम् उपैति ?

(ख) कापुरुषाः किं वदन्ति ?

(ग) आत्मशक्त्या किं कुरु ?

(घ) कुत्र दोषः नास्ति

६. अधस्तनपद्यं सस्वरं वाचयत

त्वमेव माता च पिता त्वमेव
त्वमेव बन्धुश्च सखा त्वमेव।
त्वमेव विद्या द्रविणं त्वमेव
त्वमेव सर्वं मम देवदेव॥

७. अधस्तनं पद्यं पठित्वा सुखं दुःखं च वर्णयत

सर्वं परवशं दुःखं सर्वमामवशं सुखम्।
एतद् विद्यात् समासेन लक्षणं सुखदुःखयोः॥

## लेखनम्

१. पाठस्थश्लोकानाम् अनुलेखनं कुरुत।

२. पदानि प्रयुज्य वाक्यानि रचयत

बन्धुः, कर्मसु, ध्रुवम्, अपरिहार्यः, त्यजेत्

३. युक्ताहारविहारस्य इति श्लोकस्य सरलार्थं लिखत।

४. सङ्क्षेपेण उत्तरयत

(क) आत्मनः बन्धु रिपुः च कः ?

(ख) नरकस्य त्रिविधं द्वारं किम् ?

(ग) कस्य योगः दुःखहा भवति ?

(घ) कस्य मृत्युः निश्चितः ?

(ङ) व्यवसायात्मिका बुद्धिः कतिविधा ?

५. अधोलिखितानि पद्यानि प्रपूर्य उत्तरपुस्तिकायां लिखत

(क) .................................अवसादयेत्।
आत्मैव........................................॥

(ख) त्रिविधं........................................।
................................. त्रयं त्यजेत्॥

६. शिक्षकात् "गीतोपदेशः" इति विषये श्रुत्वा श्रुतिलेखनं कुरुत।

७. शिक्षकस्य साहाय्येन अधस्तनस्य श्लोकस्य अन्वयं लिखत

विद्या ददाति विनयं विनयाद् याति पात्रताम्।
पात्रत्वाद् धनमाप्नोति धनाद् धर्मः ततः सुखम्॥

८. मञ्जूषातः विपरीतार्थिशब्दान् सञ्चिन्त्य सारिणीं पूरयत

अक्षमः, अनर्थः, अनौषधम्, अनादरः, अच्युतः, असुरः, अनादिः, अज्ञानम्, अनीश्वरः, अधर्मः

**उदाहरणम्**

आस्था– (अन्) अनास्था, विश्वासः– (अ) अविश्वासः

| | |
|---|---|
| अर्थः | |
| आदरः | |
| आदिः | |
| ज्ञानम् | |
| धर्मः | |
| औषधम् | |
| च्युतः | |
| सुरः | |
| ईश्वरः | |
| क्षमः | |

९. मञ्जूषातः अनेकार्थिशब्दान् विचित्य रिक्तस्थानं पूरयत

कुशासनम्, विनायकः, तृष्णा, हस्तः, अर्थः, श्रुतिः, कामः

**उदाहरणम्**

कामदेवः, अभिलाषा च– कामः

श्रवणं, वेदः च– इच्छा, पिपासा च–

कुशस्य आसनम्, दुष्टं शासनम् च– करः, नक्षत्रं च–

गणेशः, गरुडः च– धनम्, अभिप्रायः च–

## व्याकरणानुशीलनम्

१. अधस्तनीं रूपावलीं सामूहिकरूपेण पठत

| विभक्तियः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | कविः | कवी | कवयः |
| द्वितीया | कविम् | कवी | कवीन् |
| तृतीया | कविना | कविभ्याम् | कविभिः |
| चतुर्थी | कवये | कविभ्याम् | कविभ्यः |
| पञ्चमी | कवेः | कविभ्याम् | कविभ्यः |
| षष्ठी | कवेः | कव्योः | कवीनाम् |
| सप्तमी | कवौ | कव्योः | कविषु |
| सम्बोधनम् | हे कवे ! | हे कवी ! | हे कवयः ! |

२. उपर्युक्तां रूपावलिं पठित्वा अधस्तनानां शब्दानां रूपाणि लिखत

(क) रवि (ख) हरि (ग) मुनि

३. परस्परं मेलयत

| समूहः क | समूहः ख |
|---|---|
| अरीन् | तृतीया–बहुवचनम् |
| विरिञ्चेः | षष्ठी–द्विवचनम् |
| निधिभिः | द्वितीया–बहुवचनम् |
| ऋष्योः | सप्तमी–बहुवचनम् |
| असनिषु | पञ्चमी–एकवचनम् |

## ४. षष्ठीविभक्तेः रूपाणि पठत

| शब्दा | लिङ्गम् | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|---|
| राम | पुंलिङ्गम् | रामस्य | रामयोः | रामाणाम् |
| कविता | स्त्रीलिङ्गम् | कवितायाः | कवितयोः | कवितानाम् |
| हरि | पुंलिङ्गम् | हरेः | हर्योः | हरीणाम् |
| जननी | स्त्रीलिङ्गम् | जनन्याः | जनन्योः | जननीनाम् |
| पशु | पुंलिङ्गम् | पशोः | पश्वोः | पशूनाम् |

## ५. सारिणीम् अवलोक्य उदाहरणानुसारेण वाक्यं रचयत

उदाहरणम्– हस्तस्य भूषणं दानम् अस्ति।

<table>
<tr><td>हस्तस्य</td><td rowspan="8">भूषणम्</td><td>परोपकारः</td><td rowspan="8">अस्ति।</td></tr>
<tr><td>कण्ठस्य</td><td>अनुशासनम्</td></tr>
<tr><td>श्रोत्रस्य</td><td>सत्यम्</td></tr>
<tr><td>आकाशस्य</td><td>दानम्</td></tr>
<tr><td>विदुषः</td><td>शास्त्रम्</td></tr>
<tr><td>विद्यार्थिनाम्</td><td>चन्द्रमा</td></tr>
<tr><td>पादयोः</td><td>विनयः</td></tr>
<tr><td>परोपकारिणः</td><td>तीर्थगमनम्</td></tr>
</table>

## ६. उदाहरणानुसारं उत्तरं वदत

प्रश्नः – रामस्य पिता दशरथः अस्ति। रामः कस्य पुत्रः अस्ति ?

उत्तरम् – रामः दशरथस्य पुत्रः अस्ति।

(क) भरतः रामस्य अनुजः अस्ति। रामः कस्य अग्रजः अस्ति ?

(ख) सीता कौसल्यायाः पुत्रवधूः अस्ति। कौसल्या कस्याः श्वश्रूः अस्ति ?

(ग) अर्जुनः छात्राणां गुरुः अस्ति। छात्राः कस्य शिष्याः सन्ति ?

(घ) शम्भोः पुत्रस्य नाम भानुः अस्ति। भानोः पितुः नाम किम् अस्ति ?

(च) कृष्णः देवक्याः वसुदेवस्य च पुत्रः अस्ति। देवकी कस्य माता अस्ति ?

७. मञ्जूषातः समुचितपदानि आदाय रिक्तस्थानानि पूरयत

नेपालः ........... सुन्दरः देशः अस्ति। अस्य ......... राजधानी काष्ठमण्डपनगरी अस्ति। काष्ठमण्डपनगरी ........ नगरी अस्ति। अत्र ......... बहूनि मन्दिराणि सन्ति। नेपाले ........ सर्वोच्चशिखरः वर्तते। तस्य ......... नाम सगरमाथा वर्तते। अस्माकं देशः बुद्धस्य ....... च देशः वर्तते। बुद्धः ........... पुत्रः वर्तते। बुद्धस्य .......... नाम शुद्धोदनः वर्तते।

देशस्य, एसियामहादेशस्य, मन्दिराणाम्, देवानाम्, सीतायाः, मायादेव्याः, पितुः, शिखरस्य, विश्वस्य

## रचनात्मकः अभ्यासः

१. चित्राधारेण वाक्यानि पूरयत। नवीनानि वाक्यानि च रचयत



(क) अत्र............विद्यार्थिनः सन्ति।

(ख) गुरोः हस्तयोः ...................... पुस्तकम् अस्ति।

(ग) छात्राः.........................सन्ति।

(घ) चत्वरम् ..................... अस्ति।

२. भगवद्गीतायाः पुस्तकं दृष्ट्वा एकं सुन्दरं श्लोकम् उद्धृत्य कक्षायां श्रावयत।

**श्रवणपाठः**

जीवाः नेत्रयोः माध्यमेन पश्यन्ति। नासिकायाः माध्यमेन जिघ्रन्ति। कर्णयोः माध्यमेन शृण्वन्ति। रसनायाः माध्यमेन रसस्य आस्वादनं कुर्वन्ति। त्वचः माध्यमेन स्पर्शं कुर्वन्ति। जीवानाम् इन्द्रियाणि स्वयम् एव कार्यं कर्तुं न शक्नुवन्ति। ते आत्मनः सहयोगेन कार्यं कुर्वन्ति। आत्मा चेतनः वर्तते। यथा बसयाने चालकः भवति, तथैव शरीरे आत्मा भवति। यदा चालकः बसयानं न चालयति तदा बसयानं न चलति। तथैव यदा आत्मा शरीरं त्यजति तदा शरीरम् अपि न चलति। आत्मविहीनं शरीरं शवः इति उच्यते। यथा जनः वस्त्राणि परिवर्तयति तथा आत्मा अपि शरीरं परिवर्तयति। आत्मा न जायते, न म्रियते इति श्रीकृष्णः गीतायां कथयति। अतः शास्त्रानुसारम् आत्मा अजः नित्यः शाश्वतः च अस्ति।

दशमः पाठः

# फाल्गुन -शुक्लपूर्णिमा

**पाठप्रवेशः** **फाल्गुन -शुक्लपूर्णिमा**

नेपालस्य हिमालयक्षेत्रस्य शेर्पा मुख्या जातिः अस्ति । शेर्पाजातीयाः बौद्धधर्मं मानयन्ति । ते स्वसंस्कृत्यानुसारं नामकरणम्, चूडाकर्म, विवाहः इत्यादीन् संस्कारान् कुर्वन्ति । शेर्पासमुदाये ल्होसार, दुम्जी, ओसा इत्यादीनि पर्वाणि भवन्ति । अस्मिन् समुदाये नामकरणसंस्कारः विशेषः भवति । शोर्पाजातीयाः नामकरणस्य उत्सवे बन्धून् निमन्त्रयन्ति । बालकस्य जन्मनः तृतीये दिवसे एषः संस्कारः भवति । संस्कारकृत्यं विधातुं लामा आगच्छति । लामा शेर्पासमुदायस्य पुरोहितः अस्ति । सः बालकस्य मातुश्च मन्त्रद्वारा औषधं करोति । देवानाम्, इन्द्रियाणाम् वस्तूनां च आधारेण नामकरणं करोति । शेर्पासमुदाये कानिचन नामानि बहुप्रचलितानि सन्ति । तेषु – ङिमा (सूर्यः), दावा (चन्द्रमा) मिङ्मार (नेत्रम्) ह्लाक्पा, कुलु (कीलकम्) पेम्बा, नुर्बु (मणि) छिरिङ (चिरञ्जीवी) जिङ् (उत्तरदायी) इत्यादि नाम अधिकं प्रचलितम् भवति । नेपालस्थजातिषु अपरा मुख्या जातिः राई इत्यस्ति । राईजातीनां संस्काराः, तामाङ–



गुरुङादिजातीनां संस्काराश्च स्वस्वसंस्कृतः अनुसारम् एव सम्पाद्यन्ते। सर्वासु जातिषु जन्मादिः संस्कारः क्रियते किन्तु जातीयपरम्परानुसारं तत्र भिन्नता दृश्यते यथा – हिन्दुसंस्कृत्यनुसारं बालकस्य नामकरणसंस्कारः एकादशदिवसे सम्पाद्यते । परन्तु राईजातिषु एषः संस्कारः तृतीयदिवसाद् आरभ्य षष्ठदिवसपर्यन्तं क्रियते। राईजातीयाः चण्डीनाच (सकेला)–न्वागी–वाडाङ्मेट–इत्यादीनि पर्वाणि मानयन्ति।

शेर्पा नेपालको हिमाली क्षेत्रको मुख्य जाति हो। उनीहरू बौद्ध धर्म मान्दछन्। शेर्पाहरू आफ्नो संस्कृति अनुसार न्वारन, छेवार र विवाह संस्कार गर्दछन्। उनीहरूमा ल्होसार, दुम्जी, ओसा आदि पर्वहरू प्रचलित छन्। शेर्पा समुदायमा न्वारनको विशेष महत्त्व हुन्छ। यसमा उनीहरू आफन्तलाई बोलाउँछन्। बच्चा जन्मिएको तेस्रो दिन यो संस्कार गरिन्छ। संस्कार सम्पन्न गर्न लामा गुरु आउँछन्। लामा शेर्पा समुदायको पुरोहित हुन्। उनले मन्त्रको पाठ गर्दै शिशु र आमाको औषधोपचार गर्छन्। त्यसपछि विभिन्न देवता, इन्द्रिय तथा वस्तुहरूको आधारमा नाम राख्छन्। ङिमा, दावा, मिङ्मार, ह्लाक्पा, कुलु, पेम्बा, नुर्बु, छिरिङ, जिङ आदि नामहरू शेर्पा समाजमा अधिक प्रचलित छन्। नेपालमा रहेको अर्को मुख्य जाति राई हो। राई, तामाङ, गुरुङ आदि जातिहरूका संस्कारहरू आ–आफ्नो संस्कृतिअनुसार नै गरिन्छन्। सबै जातिमा जन्म आदि संस्कार गरिन्छन् तर त्यसमा जातीय परम्पराअनुसार भिन्नता पनि देखिन्छ। हिन्दु धर्मअनुसार बच्चाको न्वारन ११ औँ दिनमा गरिन्छ भने राईहरूमा तेस्रोदेखि छैटौँ दिनभित्र हुन्छ। राईहरू चण्डी नाच, न्वागी, वाडाङ्मेट आदि पर्वहरू मनाउँछन्।

## मूलपाठ: फाल्गुन-शुक्लपूर्णिमा

नेपाले विविधानां जातीनां निवासो वर्तते । अत्र विविधेषु क्षेत्रेषु विविधानां जातीनां निवासो वर्तते । नेपालस्य तराईक्षेत्रे विशेषतः थारुजातीयाः, यादवाः च निवसन्ति । उपत्यकायां विशेषतः नेवारजातीयाः निवसन्ति । पर्वतीयक्षेत्रे ब्राह्मणाः, क्षत्रियाः, गुरुङ्जातीयाः, मगराः चेत्यादयः निवसन्ति । हिमालयक्षेत्रे विशेषतः जनजातीनां निवासो वर्तते । एतासां भाषा संस्कृतिः च विविधा अस्ति । जीवनशैली अपि विविधा वर्तते ।

नेपाले जनाः विविधानि पर्वाणि मानयन्ति । तेषु फाल्गुनशुक्लपूर्णिमा (फागुपूर्णिमा/फागुपर्व) मुख्यं पर्व अस्ति । इदं पर्व फाल्गुनमासे भवति । स समय वसन्तस्य प्रारम्भकालः भवति । वसन्तोत्सवरूपेण अपि इदं पर्व मन्यते । पुरा द्वापर युगः आसीत् । व्रजग्रामे अस्यां तिथौ व्रजक्षेत्रे राधाकृष्णयोः लीला अभवत् । तस्माद् आरभ्य अधुनापर्यन्तं वसन्तोत्सवः भवति ।



अस्मिन् समये प्रकृतिः मनोहरा भवति । अधिकं शीतं न भवति । अधिकः तापः अपि न भवति । वनेषु नवीनाः पल्लवाः उत्पद्यन्ते । वसन्तसमये मन्दः पवनः प्रवहति । पुष्पाणि विकसन्ति । अस्मिन् काले प्रकृतिः इव मानवानां मनः अपि प्रसन्नं भवति ।

इदानीम् अपि होलिकोत्सवरूपं पर्व अस्माकं समाजे महत्त्वपूर्णं मन्यते। जनाः अस्य पर्वणः प्रतीक्षायां रममाणाः दृश्यन्ते।

फाल्गुनपूर्णिमायाः उत्सवे गायनं वाद्यञ्च भवति। होलिकायाः पूजनम् अपि भवति। होलिकोत्सवः अस्मिन् एव दिने भवति। होलिकोत्सवः दशदिनपर्यन्तं मानयन्ति। जनाः नेपालस्य पर्वतीयक्षेत्रे, तराईक्षेत्रे, उपत्यकायां च इदं पर्व भिन्नरीत्या प्रचलति।

अस्मिन् पर्वणि मानवानां हृदये महान् उल्लासः दृश्यते। बालकाः बालिकाः च मनोविनोदं कुर्वन्ति। जनाः रात्रौ दारुकाणि एकत्रीकृत्य होलिकादहनं कुर्वन्ति। ग्रामे नगरे च वाद्यवादनं कृत्वा गीतं गायन्ति। अस्मिन् पर्वणि केचन सोल्लासं नृत्यन्ति। अस्मिन् पर्वणि विशेषरूपेण परस्परं नारिकेलफलानि बीजपूरफलानि च वितरन्ति। यथा –

नारिकेलानि देयानि बीजपूरफलानि च।

गीतवाद्यैस्तथा नृत्यैः रात्रिः सा नीयते जनैः ॥

इदं फागुपर्व प्राचीनकालाद् अद्यपर्यन्तं जनानां कृते आमोदस्य अवसरः वर्तते। अस्मिन् पर्वणि दूरस्थाः जनाः अपि गृहमागच्छन्ति। बन्धुबान्धवैः सह मिलन्ति। ते परस्परं विविधतर्णयुक्तै आवीरकैः देहाङ्गानि भूषयन्ति लिम्पन्ति च। आवीरकानि आकाशे सहिष्णुभावेन जनसमूहे च प्रक्षिप्यन्ते। जनाः "पिचकारी" इति नामकेन साधनेन आवीरयुक्तस्य जलस्य सेचनं कुर्वन्ति। अद्यतनसमये इमानि कार्याणि जनाः अस्य उत्सवस्य मुख्यानि मानयन्ति। वस्तुतः इदं पर्व वसन्तोत्सवस्याङ्गं वर्तते। अस्मिन् पर्वणि जनाः मनः विनोदयन्ति। अस्य पर्वणः नेपाले धार्मिकं सांस्कृतिकं च महत्त्वं वर्तते।

नेपालमा धेरै जातजातिको बसोबास छ। नेपालको तराईमा थारु र यादवहरू बस्छन्। उपत्यकामा विशेष गरी नेवार जातिका मानिसहरू बस्छन्। पहाडी क्षेत्रमा ब्राह्मण, क्षेत्री, गुरुङ, मगर इत्यादि अनेक जातिका मानिस बस्छन्। हिमाली क्षेत्रमा जनजातिको विशेष बसोबास छ। यी सबै जातिको संस्कार पनि भिन्न छ। जीवनशैली पनि फरक छ।

नेपालका मानिसहरू विभिन्न पर्वहरू मनाउँछन्। तीमध्ये फागुपूर्णिमा एक मुख्य पर्व हो। यो पर्व फागुन महिनामा पर्छ। त्यस समयमा वसन्तको प्रारम्भ हुन्छ। वसन्तको उत्सवको रूपमा नै यो पर्व मानिएको हो। पहिले द्वापर युग थियो। त्यस समयमा यही तिथिमा व्रजभूमिमा राधा र कृष्णको लीला भएको थियो। त्यस बेलादेखि अहिलेसम्म वसन्त उत्सव मनाइन्छ।

यो समयमा प्रकृति पनि सुन्दर हुन्छ। धेरै जाडो पनि हुँदैन, धेरै गर्मी पनि हुँदैन। वनमा नयाँ पालुवा पलाएका हुन्छन्। वसन्तको समयमा शीतल हावा चल्छ। फूलहरू फुल्छन्। यो बेलामा प्रकृति जस्तै मानिसको मन पनि प्रसन्न हुन्छ। यती बेला होलिका उत्सव पर्व हाम्रो समाजमा आउँछ। मानिसहरू यो पर्वको प्रतीक्षामा रमाइरहेका हुन्छन्।

फागुपूर्णिमाको उत्सवमा मानिसहरू गीत गाउँछन् र नाच्छन्। यसै समयमा होलिकाको पूजा पनि हुन्छ। होली उत्सव यही दिनमा हुन्छ। मानिसहरू दश दिनसम्म होली उत्सव मनाउँछन्। यो पर्व नेपालको पहाडी क्षेत्रमा, उपत्यकामा र तराईमा फरक तरिकाले मनाइन्छ।

यस पर्वमा मानिसहरूको हृदयमा अत्यन्त उल्लास हुन्छ। बाल र बालिकाहरू रमाइलो गर्छन्। मानिसहरू राती एक ठाउँमा दाउरा जम्मा गरेर होलिकादहन गर्छन्। गाउँ र सहरमा बाजा बजाएर गीत गाउँछन् उल्लासपूर्वक नाच्छन्। यो पर्वमा विशेषतः नरिवल र बिमिरो एकअर्कालाई दिने प्रचलन छ।

यो पर्व प्राचीन समयदेखि अहिलेसम्म उत्सवको अवसर हो। यस पर्वमा टाढा रहेका मानिसहरू घर आउँछन्। आफन्तहरूसँग भेटघाट गर्छन्। शरीरका अङ्गमा परस्पर विभिन्न रङका अबिर दलेर रमाइलो गर्छन्। अबिर र रङ आकाशमा उडाएर रमाइलो गर्छन्। पिच्कारीले रङ मिसाएको पानी छ्याप्छन्। आजभोलि चाहिँ यिनै कार्यलाई यो पर्वको विशेषताका रूपमा बुझिन्छ। वास्तवमा यो पर्व वसन्तोत्सवको अङ्ग हो। यस पर्वमा मानिसहरू रमाइलो गर्छन्। यस पर्वको धार्मिक र सांस्कृतिक महत्त्व रहेको छ।

## शब्दार्थाः

| मूलशब्दः | संस्कृते पर्यायः | नेपाल्याम् अर्थः | आङ्गलभाषायाम् अथ्ः |
|---|---|---|---|
| अपरा | अन्या (स्त्री.) | अर्को | Another |
| विविधानाम् | अनेकेषाम् | विभिन्न (को) | Of many kinds |
| व्रजग्रामे | पशुप्रधाने मथुरानिकटस्थाने | पशुपालन गरिने मथुरा नजिकको गाउँ | Name of a district near Mathura ,India where mostly cowherd live |
| मनोहरा | चित्ताकर्षिणी | मोहित पार्ने | Enchanting |
| प्रतीयते | अनुभूयते | मनमा लाग्छ | Have a feeling or experience |
| पल्लवाः | मञ्जर्यः | पालुवा | Newly sprouted leaf, shoot |
| नीडम् | विहगावासः | गुँड | Nest |
| उल्लासः | हर्षः | खुसीयाली | Delight |
| मनोविनोदः | मनोरञ्जनम् | रमाइलो | Entertainment |
| दारुकाणि | काष्ठ पुत्तलिकाः | काठको पुत्ला | Effigy |
| नारिकेलफलम् | चोचफलम् | नरिवल | Coconut |
| बीजपूरफलम् | फलविशेषः | बिमिरो | Acene, citron |
| आमोदः | प्रसन्नता | खुसी | Pleasure |
| आवीरकम् | आवीरचूर्णम् | अबिर | A powder usually red, which is used in worships or at the Holi festival |
| लिम्पन्ति | लेपनं कुर्वन्ति | पोत्छन् | Smear |

## अभ्यासः

### श्रवणं भाषणं च

१. अधोलिखितान् शब्दान् स्पष्टम् उच्चारयत।

फाल्गुनशुक्लपूर्णिमा, उल्लासः, पल्लवाः, होलिकोत्सवः, एकत्रीकृत्य, बन्धुबान्धवैः।

२. पाठस्य अनुच्छेदानां द्रुतपठनं कुरुत।

३. शिक्षकस्य मुखात् अन्तिमम् अनुच्छेदं श्रुत्वा तस्य अर्थं विचारयत।

४. अधः प्रदत्तम् अनुच्छेदं सम्यक् श्रावयत

कर्णालीप्रदेशे बहूनि पर्वाणि प्रचलितानि सन्ति। तेषु मस्टोपरम्परा, गौरापूजा, विजयादशमी, भ्रातृपूजा इत्यादीनि प्रमुखाणि सन्ति। कर्णाली–प्रदेशे प्रचलितेषु पर्वसु मस्टोपरम्परा विशेषमहत्त्वं लभते। मस्टोपरम्परायां मस्टोदेवतायाः पूजा क्रियते। मस्टोदेवता मनुष्येषु रूपान्तरितो भवति। येषु मनुष्येषु मस्टोदेवता समारूढा भवति, ते मनुष्याः "धामी" इति कथ्यन्ते। पुरुषे यदा मस्टोदेवता समारूढा भवति तदा सः विविधान् दैवीचमत्कारान् प्रदर्शयति। सः तप्ततैले हस्तं मुखे ज्वलदङ्गारञ्च स्थापयितुं शक्नोति। इत्थं मस्टो देवशक्तिः अस्ति, सा मनुष्येषु समारूढा भवति। इयमेव परम्परा मस्टोपरम्परा इति उच्यते।

कर्णाली प्रदेशमा मनाइने धेरै पर्वहरू प्रचलित छन्। तिनीहरूमध्ये मस्टोपरम्परा, गौरापूजा, विजयादशमी, भातृपूजा इत्यादि पर्वहरू मुख्य रहेका छन्। कर्णाली प्रदेशमा प्रचलित पर्वहरूमा मस्टोपरम्पराले विशेष महत्त्व पाएको छ। मस्टोपरम्परामा मस्टोदेवताको पूजा गरिन्छ। मस्टोदेवता मानिसमा अवतरित हुन्छ। जुन मानिसहरूमा मस्टोदेवता अवतरित हुन्छ ती मानिसहरूलाई धामी भनिन्छ। पुरुषमा जहिले मस्टो देवता अवतरित हुन्छ, त्यही समयमा उसले अनेक चमत्कार प्रदर्शन गर्दछ। उसले तातो तेलमा हात राख्न र मुखमा बलेको कोइला राख्न सक्दछ। यसप्रकार मस्टो दैविक शक्ति हो। यो मानिसमा अवतरित हुन्छ। यही परम्परालाई नै मस्टो परम्परा भनिन्छ।

५. शिक्षकात् द्वितीयम् अनुच्छेदं श्रुत्वा पुस्तिकायां लिखत।

६. अनुच्छेदं श्रुत्वा उत्तरं वदत।

नेपाले बहूनि स्थानीयानि पर्वाणि सन्ति । तेषु गौरापर्व एकं मुख्यं पर्व वर्तते। सुदूरपश्चिमक्षेत्रे कर्णालीक्षेत्रे च एतत् पर्व प्रचलितम् अस्ति। भारतस्य कुमाउ–अल्मोडा–गढवालक्षेत्रेषु च गौरापर्व मन्यते । हिमालयस्य पुत्री गौरी आसीत्। सा शिवं पतिरूपेण प्राप्तुम् ऐच्छत्। गौरी गौराव्रतम् अनुष्ठाय शिवं पतिं प्राप्नोत्। एषा कथा स्कन्दपुराणे वर्तते। अस्मिन् पर्वणि नार्यः व्रतम् अनुतिष्ठन्ति। ताः समृद्धिम्, सुखम्, दीर्घायुष्यञ्च कामयन्ते। अस्य पर्वणः अनुष्ठानं सहस्रवर्षेभ्यः प्रचलितं वर्तते । विशेषतः सौभाग्यवत्यः नार्यः व्रतं कुर्वन्ति । अस्मिन् पर्वणि गौरीमहेश्वरयोः पूजा भवति। गीतनृत्ययोः उत्सवः अपि भवति।

(क) गौरापर्व नेपालस्य कस्मिन् क्षेत्रे प्रचलितम् अस्ति?

(ख) गौरी गौराव्रतेन कम् प्राप्नोत् ?

(ग) गौरापर्व भारतस्य कस्मिन् क्षेत्रे प्रचलितम् अस्ति ?

(घ) नार्यः गौराव्रतस्य अनुष्ठानं कृत्वा किं कामयन्ते ?

(ङ) काभिः गौरापर्वणः अनुष्ठानं क्रियते ?

(च) गौरापर्वणि कयोः पूजनं भवति ?

नेपालमा धेरै स्थानीय पर्व मानिन्छन्। तीमध्ये गौरापर्व पनि मुख्य पर्व हो। सुदूर पश्चिम र कर्णाली क्षेत्रमा यो पर्व प्रचलित छ। भारतको कुमाउ, अल्मोडा, गढवाल क्षेत्रमा पनि यो पर्व मनाइन्छ। हिमालयकी पुत्री गौरी थिइन्। उनले शिवलाई पतिको रूपमा पाउने इच्छा गरिन् । गौरा व्रतको अनुष्ठान गरेर उनले शिवलाई पतिको रूपमा प्राप्त गरिन् । यो कथा स्कन्दपुराणमा छ । यो पर्वमा नारीहरू व्रत अनुष्ठान गर्छन् । समृद्धि, सुख र दीर्घायुको कामना गर्छन् । यो पर्वको अनुष्ठान हजारौँ वर्षदेखि चलेको छ। विशेषतः विवाहित (सौभाग्यवती) नारीहरूले यो व्रत लिन्छन् । यस पर्वमा गौरी र महेश्वरको पूजा हुन्छ। नाच्ने गाउने गरेर उत्सव पनि मनाइन्छ।

७. अधोलिखितानां शब्दानाम् नेपालिभाषायाम् अर्थं वदत।

पक्षिणः, पुष्पाणि, उत्सवः दारुकाणि, बीजपूरम्

८. पाठस्य आधारेण उत्तरं दत्त।

(क) थारुजातीयाः जनाः कुत्र निवसन्ति ?

(ख) जनाः दारुकाणि एकत्रीकृत्य किं कुर्वन्ति?

(ग) फाल्गुनपूर्णिमायां कस्य पूजा भवति ?

(घ) जनाः कैः देहाङ्गानि भूषयन्ति ?

(ङ) अस्य पर्वणः नेपाले कीदृशं महत्त्वम् अस्ति?

९. शिक्षकात् श्रवणपाठं श्रुत्वा सत्यकथने "आम्" असत्यकथने च "न" इति वदत।

(क) नेपाले मूर्तिकलायाः विकासः मल्लकाले नाभवत्।

(ख) मूर्तिनिर्माणे कुशलता नावश्यकी।

(ग) मृत्पाषाणैः काष्ठादिभिः च मूर्तिः निर्मीयते।

(घ) हाँडीग्रामे सरस्वत्याः मूर्तिः अस्ति।

(ङ) महिषासुरमर्दिन्याः मूर्तिः भक्तपुरे अस्ति।

## पठनम्

१. पाठस्य प्रथमम् अनुच्छेदम् निरवच्छिन्नं पठत।

२. लेख्यचिह्नानि विचार्य पाठस्य तृतीयम् अनुच्छेदं पठत।

३. चतुर्थम् अनुच्छेदं साभिनयं पठत।

४. अधस्तनस्य बोधपाठस्य मौनपठनं कुरुत

वासस्थानानां निर्माणस्य कला एव वास्तुकला अस्ति। मठ–मन्दिर–सदनादिषु वास्तुकलायाः विविधाः प्रयोगाः भवन्ति। अस्माकं देशे मन्दिरेषु, प्रासादेषु, बौद्धविहारेषु च विशेषतः वास्तुकलायाः प्रयोगः दृश्यते। अत्र बहुत्र गृहेषु अपि वास्तुकलायाः उत्तमानि उदाहरणानि द्रष्टुं शक्यन्ते। वास्तुकलायाः त्रिविधा

शैली नेपाले प्रयुक्ता दृश्यते— तासु प्यागोडाशैली, शिखरशैली, स्तूपशैली च मुख्याः सन्ति।

अस्माकं देशे मन्दिराणि प्रायः प्यागोडाशैल्यां निर्मितानि सन्ति। अनया शैल्या निर्मितेषु भवनेषु द्वाराणि बहूनि भवन्ति। पशुपतिनाथस्य मन्दिरं प्यागोडाशैल्याः उत्कृष्टम् उदाहरणम् अस्ति। अरनिको इत्यभिधेयेन कलाकारेण इयं शैली चीनदेशे च प्रसारिता आसीत्। शिखरशैल्या निर्मितेषु भवनेषु उपरि बहिर्भागे पञ्चसु नवसु वा भागेषु लम्बाकृतिः भवति। प्रतिभागं शिखरं च निर्मित भवति। ललितपुरस्य कृष्णमन्दिरं शिखरशैल्याः उत्तमम् उदाहरणम्। तथैव स्तूपानां निर्माणाय प्रयुक्ता शैली स्तूपशैली अस्ति। स्वयम्भूनाथस्य, बौद्धनाथस्य, अन्यत्र च बौद्धविहाराणां निर्माणं स्तूपशैल्या एव कृतम् अस्ति।

वासस्थानहरूको निर्माणको कला नै वास्तुकला हो। मठ, मन्दिर र घरहरूमा वास्तुकलाको विविध प्रयोग हुन्छन्। हाम्रो देशमा मन्दिर, दरबार आदि ठूला भवन र बौद्धविहारहरूमा विशेष गरेर वास्तुकलाको प्रयोग देखिन्छ। यहाँ धेरैतिर घरहरूमा पनि वास्तुकलाका राम्रा उदाहरणहरू देख्न पाइन्छ। वास्तुकलाको तीन प्रकारको शैली नेपालमा प्रयोग गरिएको पाइन्छ— प्यागोडाशैली, शिखरशैली, स्तूपशैली।

हाम्रो देशमा मन्दिरहरू प्रायः प्यागोडाशैलीमा निर्मित छन्। यो शैलीमा निर्माण गरिएका भवनहरूमा ढोका धेरै हुन्छन्। पशुपतिनाथको मन्दिर प्यागोडाशैलीको उत्कृष्ट उदाहरण हो। अरनिको नामका कलाकारले यो शैलीको चीनदेशमा पनि प्रचार गरेका थिए। शिखरशैलीमा निर्मित भवनहरूमा माथिपट्टि बाहिरी भागमा पाँच या नौ स्थानमा लामा आकृतिहरू निर्माण गरिएका हुन्छन् र प्रत्येकमा शिखर बनाइएको हुन्छ। ललितपुरको कृष्णमन्दिर शिखरशैलीको राम्रो उदाहरण हो। त्यसैगरी स्तूपहरूको निर्माणका लागि प्रयोग गरिएको शैली स्तूपशैली हो। स्वयम्भूनाथ, बौद्धनाथ र अन्यत्र पनि बौद्धविहारहरूको निर्माण स्तूपशैलीमा नै गरिएको छ।

## ५. बोधपाठस्य आधारेण उत्तराणि वदत

(क) नेपाले मन्दिराणि प्रायः कस्यां शैल्यां निर्मितानि सन्ति ?

(ख) प्यागोडाशैल्याः भवनेषु द्वाराणि कति भवन्ति ?

(ग) प्यागोडाशैल्याः उत्कृष्टम् उदाहरणं किम् अस्ति ?

(घ) कः चीनदेशे प्यागोडाशैल्याः प्रसारम् अकरोत् ?

(ङ) शिखरशैल्याः भवनेषु प्रतिभागं किं निर्मितं भवति ?

(च) शिखरशैल्याः उत्तमम् उदाहरणं किम् अस्ति ?

(छ) कीदृशी शैली स्तूपशैली अस्ति ?

(ज) केषां निर्माणं स्तूपशैल्याम् कृतम् अस्ति ?

## ६. उपरि मौनपठनं कृतं गद्यम् आधृत्य रिक्तस्थानानि पूरयत

(क) वासस्थानानां निर्माणस्य .......... एव .......... अस्ति।

(ख) वास्तुकलायाः त्रिविधा .......... नेपाले .......... दृश्यते।

(ग) मठ–मन्दिर .......... वास्तुकलायाः विविधाः .......... भवन्ति।

(घ) बहुत्र .......... अपि वास्तुकलायाः .......... उदाहरणानि द्रष्टुं ..........।

## ७. मञ्जूषायाः सहायतया चित्रस्य वर्णनात्मकेषु वाक्येषु उचितं पदं कथयत



(क) अत्र ........... अस्ति।

(ख) मन्दिरं ........... अस्ति।

(ग) आकाशं ........... अस्ति

(ख) भक्तजनाः ........... सन्ति।

(ङ) सर्वे भक्ताः ........... सन्ति।

| |
|---|
| रामजानकीमन्दिरम्, स्वच्छम्, प्रसन्नाः, विशालम्, बहवः |

८. लेख्यचिह्नानुकूल्येन प्रदत्तस्य गद्यस्य उच्चस्वरेण पठनं कुरुत

चित्रकला अस्माकं प्राचीना कला अस्ति । वस्तूनाम् अनुकृतिः चित्रं भवति । अङ्कनी, लेखनी, वर्णलेखनी, कूर्चः, बालुका, कर्गजखण्डः इत्याद्याः अनेकाः सामग्र्यः चित्रकलायै प्रयोक्तुं शक्यन्ते । सामग्रीणां रचनाशैलीनां च भेदेन चित्राणां प्रकाराः अपि अनेके सन्ति । तत्र आधारदृष्ट्या चित्राणि त्रिविधानि भवन्ति— ग्रन्थचित्रम्, वस्त्रचित्रम्, भित्तिचित्रं च ।

प्राचीनकाले ग्रन्थचित्राणां रचना ताम्रपत्र-भूर्जपत्रादिषु भवति स्म परन्तु सम्प्रति कर्गजेषु भवति । वस्त्रेषु रचितं चित्रं वस्त्रचित्रम् अस्ति । अस्माकं देशे वस्त्रचित्रेषु थाङ्काचित्रम् अतीव प्रसिद्धम् अस्ति । भित्तिचित्राणि गृहाणाम्, मन्दिराणाम्, बौद्धविहाराणां च भित्तिषु रचितानि भवन्ति । अस्मिन् देशे भित्तिचित्रस्य सुप्रसिद्धम् उदाहरणं मिथिलाचित्रकला अस्ति । इयं चित्रकला मिथिलाक्षेत्रे प्रसिद्धा अस्ति । भित्तौ देवानाम्, पशूनाम्, पक्षिणां च चित्राणि रच्यन्ते । पिशाचादिनिवारणं च भित्तिचित्राणाम् एकं प्रयोजनं मन्यते । नेपालस्य मिथिलाचित्रकलायाः प्रख्यातिः विदेशेषु च अस्ति । अतः तां द्रष्टुं च पर्यटकाः अत्र आगच्छन्ति ।

चित्रकला हाम्रो प्राचीन कला हो । वस्तुहरूको अनुकरण चित्र हो । पेन्सिल, कलम, कलर पेन, कूची, बालुवा, कागजका टुक्रा इत्यादि अनेकौँ सामग्रीहरू चित्रकलाका लागि प्रयोग गर्न सकिन्छ । सामग्री र रचनाशैलीका भेदले चित्रका प्रकार पनि थुप्रै छन् । आधारका दृष्टिले चित्रहरू तीन प्रकारका हुन्छन्— ग्रन्थचित्र, वस्त्रचित्र र भित्ते चित्र ।

प्राचीन कालमा ग्रन्थचित्रहरूको रचना ताम्रपत्र, भूर्जपत्र आदिमा हुन्थ्यो तर आजभोलि कागजमा हुन्छ । कपडामा रचित चित्र वस्त्रचित्र हो । हाम्रो देशमा वस्त्रचित्रका लागि थाङ्काचित्र अत्यन्तै प्रसिद्ध छ । भित्ते चित्र घर, मन्दिर र बौद्धविहारका भित्ताहरूमा बनाइएका हुन्छन् । यस देशमा भित्ते चित्रको निकै प्रसिद्ध उदाहरण मिथिलाचित्रकला हो । यो चित्रकला मिथिलाक्षेत्रमा प्रसिद्ध छ । भित्तामा देवता र पशुपक्षीहरूका चित्र बनाइन्छन् । पिशाच आदिको निवारण पनि भित्ते चित्रको एउटा प्रयोजन मानिन्छ । नेपालको मिथिला चित्रकलाको प्रसिद्धि विदेशमा पनि छ । त्यसैले मिथिलाचित्रकला हेर्नका लागि समेत पर्यटकहरू नेपाल आउँछन् ।

९. वाक्यानि उच्चार्य उपरि प्रदत्तस्य गद्यस्य आधारेण “आम्” “न” इति लिखत

(क) चित्रकला अस्माकं प्राचीना कला अस्ति। ....................

(ख) वस्तूनाम् अनुकृतिः चित्रं भवति। ....................

(ग) केवलं कूर्चः चित्रकलायै प्रयुज्यते। ....................

(घ) चित्राणां प्रकाराः अपि अनेके सन्ति। ....................

(ङ) कर्गजेषु रचितं चित्रं वस्त्रचित्रम् अस्ति। ....................

(च) वस्त्रचित्रे थाङ्काचित्रम् अतीव प्रसिद्धम्। ....................

(छ) भित्तिचित्राणि भित्तिषु रचितानि भवन्ति। ....................

(ज) भित्तिचित्रस्य उदाहरणं मिथिलाचित्रकला अस्ति। ....................

(झ) मिथिलाचित्रकला भक्तपुरे प्रसिद्धा अस्ति। ....................

(ञ) मिथिलाचित्रकलायाः दर्शनाय पर्यटकाः अत्र आगच्छन्ति। ....................

## लेखनम्

१. अधस्तनानि पदानि अभ्यासपुस्तिकायां शुद्धतया लिखत

सृष्टिक्रमम्, प्राचीनकालात्, कल्याणजनकः, राधाकृष्णयोः, फाल्गुणशुक्लपूर्णिमायाम्, अभीरकाणि, सहिष्णुभावेन, वसन्तोत्सवस्य, वैविध्यभरिता, भिन्नरीत्या।

२. अधस्तनानां पदानाम् अशुद्धीः निराकुरुत

बिविधानाम्, ईत्यादयः, निवशन्ति, भासायाम्, जीबनशैल्याम्, , सांस्क्रितिकम् पर्वाणी, भुषयन्ति, दुरस्थाः, षैत्यम्, लतावृक्षेसु, माधूर्ये।

३. अधस्तनानां पदानाम् अर्थं लिखत

बीजपूरफलानि, आमोदस्य, शीतकाले, नश्यति, प्रारम्भकालः, उल्लासः, मनोविनोदः, दारुकाणि, एकत्रीकृत्य।

४. पाठस्य द्वितीयस्य अनुच्छेदस्य श्रुतलेखनं कुरुत।

५. पाठस्य अन्तिमम् अनुच्छेदं पठित्वा निम्नप्रश्नानाम् उत्तराणि लिखत

(क) फागुपर्व कस्य अवसरः अस्ति ?

(ख) फागुपर्वणि जनाः परस्परं कैः लिम्पन्ति ?

(ग) फागुपर्व कस्य अङ्गं वर्तते ?

(घ) नेपाले फागुपर्वणः कीदृशं महत्त्वं वर्तते ?

(ङ) "वसन्तोत्सवः" इत्यस्य सन्धिविच्छेदं कुरुत।

६. अधस्तनं गद्यं पठित्वा प्रदत्तानि कार्याणि कुरुत

अस्माकं संस्कृतिः वैविध्यभरिता अस्ति। हिमालये भिन्ना संस्कृतिः अस्ति। पर्वते भिन्ना संस्कृतिः अस्ति। तराईक्षेत्रे भिन्ना संस्कृतिः अस्ति। एवं पूर्वभागे भिन्ना संस्कृतिः अस्ति। मध्यभागे भिन्ना संस्कृतिः अस्ति। पश्चिमभागे भिन्ना संस्कृतिः अस्ति। पुनः ब्राह्मणे भिन्ना संस्कृतिः अस्ति। क्षत्रिये भिन्ना संस्कृतिः अस्ति। नेवारसमुदाये भिन्ना संस्कृतिः अस्ति। तामाङसमुदाये भिन्ना संस्कृतिः अस्ति। थारुसमुदाये भिन्ना संस्कृतिः अस्ति। हिन्दूनां भिन्ना संस्कृतिः अस्ति। बौद्धानां भिन्ना संस्कृतिः अस्ति। मुस्लिमानां भिन्ना संस्कृतिः अस्ति। एवम् अस्माकं देशे प्रतिस्थानं प्रतिप्रदेशं प्रतिसमुदायं च भिन्ना संस्कृतिः प्राप्यते। यद्यपि अत्र संस्कृतिषु अनेकता दृश्यते तथापि अत्र समाजे एकता अस्ति। अत्र सर्वे नागरिकाः परस्पदं मिलित्वा एव तिष्ठन्ति। यतः विविधानां संस्कृतीनां योजिका सहिष्णुता अत्र सर्वेषां मनसि वर्तते। वयं सर्वासां संस्कृतीनां सम्मानं कुर्मः। अत्र शेर्पा अपि छठपर्वणि ठेकुवां खादति। यादवः अपि ल्होसारे घृतटीकां धारयति। राजवंशी सेलोगानं करोति। तामाङः दण्डनृत्यं करोति। ब्राह्मणः रोधीगृहं गच्छति। मगरः भजनं गायति। वयम् अन्येषां हर्षे हर्षिताः भवामः। अन्येषां दुःखे दुःखिनः भवामः। अस्मासु परस्परम् ईर्ष्या नास्ति। द्वेषः नास्ति द्रोहः नास्ति। अतः अत्र कलहः नास्ति। पूर्वं वयं मानवाः स्मः। तदनन्तरं वयं हिमालयीयाः स्म, पर्वतीयाः स्मः, मध्यदेशीयाः स्मः, राईजातीयाः स्मः, गुरुङजातीयाः स्मः, नेवारजातीयाः स्मः, धिमालजातीयाः स्मः, हिन्दवः स्मः, बौद्धाः स्मः। एषा एव अस्माकं सामूहिकी संस्कृतिः अस्ति। अतः अस्माकं समाजश्च सुसमाजः अस्ति।

हाम्रो संस्कृति विविधताले भरिएको छ। हिमालयमा छुट्टै संस्कृति छ। पहाडमा छुट्टै संस्कृति छ। तराईमा छुट्टै संस्कृति छ। त्यसैगरी पूर्वमा छुट्टै संस्कृति छ। मध्यभागमा छुट्टै संस्कृति छ। पश्चिमतिर छुट्टै संस्कृति छ। ब्राह्मणमा छुट्टै संस्कृति छ। क्षत्रियमा छुट्टै संस्कृति छ। नेवार समुदायमा छुट्टै संस्कृति छ। तामाङ समुदायमा छुट्टै संस्कृति छ। थारु समुदायमा छुट्टै संस्कृति छ। हिन्दुहरूको छुट्टै संस्कृति छ। बौद्धहरूको छुट्टै संस्कृति छ। मुस्लिमहरूको छुट्टै संस्कृति छ। यसरी हाम्रो देशमा प्रत्येक स्थान, प्रत्येक प्रदेश, प्रत्येक समुदायमा भिन्न संस्कृति छ। यद्यपि यहाँ संस्कृतिमा भिन्नता छ तथापि समाजमा एकता छ। यहाँ सबै नागरिक मिलेरै बस्दछन् किनकि विविध संस्कृतिलाई जोड्ने सहिष्णुता यहाँ सबैको मनमा छ। हामी सबैको संस्कृतिलाई सम्मान गर्दछौँ। यहाँ शेर्पाले पनि छठमा ठेकुवा खान्छन्। यादवले पति ल्होसारमा घिउको टीका लगाउँछन्। राजवंशी सेलो गाउँछन्। तामाङले लठवानाच नाच्छन्। ब्राह्मण रोधीमा जान्छन्। मगरले भजन गाउँछन्। हामी अरूको खुसीमा खुसी हुन्छौँ। अरूको दुःखमा दुःखी हुन्छौँ। हाम्रा बिचमा ईर्ष्या छैनन्न द्वेष छैन द्रोह छैन। त्यसैले झगडा छैन। हामी पहिला मानव हौँ। त्यसपछि हिमाली हौँ, पहाडी हौँ, मधेसी हौँ, राई हौँ, गुरुङ हौँ, नेवार हौँ, धिमाल हौँ, हिन्दु हौँ र बौद्ध हौँ। यो हाम्रो साझा संस्कृति हो। त्यसैले हाम्रो समाज सुसमाज भएको छ।

(क) एकपदेन उत्तरयत

(अ) अस्माकं संस्कृतिः कीदृशी अस्ति ?

(आ) शेर्पा छठपर्वणि किं खादति ?

(इ) एकता कुत्र अस्ति ?

(ई) मगरः किं गायति ?

(उ) अस्माकं समाजः कीदृशः अस्ति ?

(ख) पूर्णवाक्येन उत्तरयत

(अ) अस्माकं देशे कुत्र कुत्र भिन्ना संस्कृतिः प्राप्यते ?

(आ) अत्र सर्वे कथं तिष्ठन्ति ?

(इ) का सर्वेषां मनसि वर्तते ?

(ई) वयं कुत्र दु:खिन: भवाम: ?

(उ) वयं पूर्वं के स्म: ?

(ग) इदं गद्यं पठित्वा युष्माभि: किं ज्ञातम् ? स्वभाषायाम् एकं लघुम् अनुच्छेदं लिखत।

(घ) भाषिककार्यं कुरुत

(अ) "हिमालये" इत्यस्य विभक्ति: का ?

(आ) "पुन:" इत्यस्य अर्थ: क: ?

(इ) "यद्यपि" इत्यस्य सन्धिविच्छेदं कुरुत।

(ई) "वयम् अन्येषां हर्षे हर्षिता: भवाम:" इति वाक्ये क: कर्ता ? का च क्रिया ?

(उ) "कुर्म:" इति क्रियापदस्य पुरुषवचने के ?

७. अधस्तनं पद्यं तस्य भावार्थं च पठित्वा कीदृश: जन: पण्डित: भवति ? इति स्वभाषया लिखत।

विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि।
शुनि चैव श्वपाके च पण्डिता: समदर्शिन: ॥

पण्डित: विद्यायुक्ते विद्याहीने च जने समं पश्यति। पण्डित: विनीते अविनीते च समं पश्यति। पण्डित: सर्वेषु जनेषु समं पश्यति। पण्डित: गवि हस्तिनि कुक्कुरे च समं पश्यति। अत: य: सर्वेषु प्राणिषु समभावं करोति, भेदभावं न करोति, स: पण्डित: अस्ति।

> पण्डितले विद्यायुक्त र विद्याहीनलाई बराबर देख्दछ। पण्डितले विनययुक्त र विनयहीनलाई बराबर देख्दछ। पण्डितले सबै मानिसलाई बराबर देख्दछ। पण्डितले गाई, हात्ती र कुकुरलाई बराबर देख्दछ। यसकारण जसले सबै प्राणीमा समभाव राख्दछ, भेदभाव गर्दैन, त्यसलाई पण्डित भनिन्छ।

८. पाठस्य श्लोकं शुद्धतया विलिख्य फागुपर्वणि रात्रिः कथं नीयते ? सरलैः वाक्यैः लिखत।

९. अधस्तनान् प्रश्नान् उत्तरयत

(क) नेपाले काः जातयः निवसन्ति ?

(ख) फागुपर्व कदा भवति ?

(ग) वसन्तसमये किं किं न अनुभूयते ?

(घ) होलिकोत्सवः कतिदिनपर्यन्तं भवति ?

(ङ) जनाः कथं होलिकादहनं कुर्वन्ति ?

(च) फागुपर्वणि जनाः कीदृशस्य जलस्य सेचनं कुर्वन्ति ?

(छ) फागुपर्वणि के गृहम् आगच्छन्ति ?

## रचनात्मकः अभ्यासः

१. स्वस्य प्रियपर्वणः विषये निर्देशानुसारं लिखत

(क) पर्वनाम ...........

(ख) तिथिः/दिनाङ्कः ...........

(ग) मासः .............

(घ) प्रचलनम् ...........................

(ङ) विशेषं खाद्यम् (अस्ति चेत्) ................

(च) प्रयुज्यमानं वाद्यम् (अस्ति चेत्) ...............

(छ) प्रदर्शनीयं नृत्यं गीतं वा (अस्ति चेत्) .................

(ज) मौलिकं परिधानम् ........................

२. प्रथमप्रश्नस्य विवरणम् आधारीकृत्य "मम प्रियपर्व" इति विषये अनुच्छेदं रचयत।

३. निर्देशानुसारं केषाञ्चन पञ्चप्रतिवेशिनां संस्कृतिविषये प्रदत्तां सारिणीं पूरयत

| प्रतिवेशिनः नाम | पर्वनाम (एकम्) | लोकनृत्यम् लोकगीतम् वा | विशेषं खाद्यम् (अस्ति चेत्) | मौलिकं परिधानम् | पर्वणि प्रयुज्यमानं वाद्यम् (अस्ति चेत्) |
|---|---|---|---|---|---|
| १. | | | | | |
| २. | | | | | |
| ३. | | | | | |
| ४. | | | | | |
| ५. | | | | | |
| ६. | | | | | |
| ७ | | | | | |
| ८. | | | | | |

## व्याकरणानुशीलनम्

१. अधस्तनीं शब्दरूपावलिं पठित्वा प्रश्नान् उत्तरयत

संस्कृति–शब्दस्य (इकारान्तस्य स्त्रीलिङ्गस्य) रूपाणि–

| एकवचनम् | द्विवचनम् | बहुवचनम् | विभक्तिः |
|---|---|---|---|
| संस्कृतिः | संस्कृती | संस्कृतयः | – प्रथमा |
| संस्कृतिम् | संस्कृती | संस्कृतीः | – द्वितीया |
| संस्कृत्या | संस्कृतिभ्याम् | संस्कृतिभिः | – तृतीया |
| संस्कृत्यै/संस्कृतये | संस्कृतिभ्याम् | संस्कृतिभ्यः | – चतुर्थी |
| संस्कृत्याः/संस्कृतेः | संस्कृतिभ्याम् | संस्कृतिभ्यः | – पञ्चमी |
| संस्कृत्याः/संस्कृतेः | संस्कृत्योः | संस्कृतीनाम् | – षष्ठी |
| संस्कृत्याम्/संस्कृतौ | संस्कृत्योः | संस्कृतिषु | – सप्तमी |
| हे संस्कृते ! | हे संस्कृती ! | हे संस्कृतयः ! | – सम्बोधनम् |

**(अ) उदाहरणानुसारेण शब्दरूपं निर्मात**

| | | |
|---|---|---|
| यथा–संस्कृति– | संस्कृत्याः/संस्कृतेः | मति– मत्याः/मतेः |
| प्रकृतीः | वृद्धि– | नीति– |
| शान्त्या | आवलि– | सिद्धि– |
| मुक्तये | भुक्ति– | दीप्ति– |
| विपत्याम् | स्थिति– | व्यक्ति– |
| बुद्ध्याः | रुचि– | कृति– |
| त्रुटयः | विभक्ति– | सम्पत्ति– |

**(आ) कोष्ठस्थसङ्केतमनुसृत्य रिक्तस्थानं पूरयत**

(क) मानवाः ............. प्रेरिताः भवन्ति । (प्रकृति– तृतीयाविभक्तेः एकवचनम्)

(ख) नेपालदेशे विविधानां ............. जनाः निवसन्ति । (जाति– षष्ठीविभक्तेः बहुवचनम्)

(ग) केवलं भाषणेन ............. नैव आयाति । (समृद्धि– प्रथमाविभक्तेः एकवचनम्)

(घ) अहं बालकृष्णस्य द्वे ............. अपठम् । (कृति– द्वितीयाविभक्तेः द्विवचनम्)

(ङ) अस्माकं ............. आधारः संस्कृतमेव वर्तते । (संस्कृति– षष्ठीविभक्तेः एकवचनम्)

(च) सम्पत्तौ ............. च समव्यवहारः साधोः लक्षणमस्ति । (विपत्ति– सप्तमीविभक्तेः एकवचनम्)

(छ) .................. ! मम नमस्कारं स्वीकुरु । (क्षिति– सम्बोधनस्य एकवचनम्)

**(इ) जाति-शब्दस्य सर्वासु विभक्तिषु रूपाणि लिखत ।**

२. अधस्तनम्अनुच्छेदं पठित्वा सप्तमीविभक्त्यन्तानि पदानि रेखया परिवेष्टयत

उजेली कुमालः नुवाकोटजनपदस्य विदुरनगरपालिकायां निवसति । तस्याः परिवारे पञ्च सदस्याः सन्ति । सा चतुर्थकक्षायां पठति । तस्याः विद्यालयः गृहस्य समीपे एव वर्तते । विद्यालये सम्प्रति संस्कृतस्य अपि पठनंपाठनं च भवति । संस्कृतपठने तस्याः अधिका रुचिः विद्यते । सा प्रातः सूर्योदयात् प्राक् उत्थाय इष्टदेवे चित्तं लीनयति । तदनु नित्यकर्म समाप्य पठने, लेखने

च संलग्ना भवति। यदा सा भूमौ आसने स्थित्वा सलयं श्लोकान् वाचयति, गृहस्थाः अन्ये जनाः साभिरुचि शृण्वन्ति। सा समये समये पठितविषये प्रवचनं च करोति। परिवारे, विद्यालये, समुदाये च संस्कारसंस्कृत्योः महत्त्वविषये कथयति। तस्मिन् कार्ये सा सन्तोषम् अनुभवाति। जनाः अपि तस्यां स्नेहं कुर्वन्ति। कुमालजातिः नेपालस्य आदिवासिषु अन्यतमा विद्यते।

३. कोष्ठस्थशब्दानां सप्तम्यन्तरूपैः रिक्तस्थानानि पूरयत

(क) बालः मातुः .................. शेते। (उत्सङ्ग)

(ख) माता .................. भोजनम् अपचत्। (स्थाली)

(ग) विद्यार्थी .................. उपविष्टवान् अस्ति। (आसन)

(घ) मम भगिन्याः .................. रुचिः वर्तते। (सङ्गीत)

(ङ) .................. सगरमाथा उच्चः विद्यते। (शिखर)

(च) कृते .................. सर्वं साध्यं भवति। (परिश्रम)

(छ) अपरिचितायां .................. विश्वासः नैव कर्तव्यः। (व्यक्ति)

(ज) बहवः छात्राः .................. पठन्ति। (पाठशाला)

(झ) .................. बहूनि पुस्तकानि सन्ति। (उत्पीठिका)

(ञ) कृषकः .................. बीजं वपति। (क्षेत्र)

४. पाठस्य तृतीयम् अनुच्छेदम् अभ्यासपुस्तिकायाम् अनुलिख्य तत्र प्रयुक्तानि सप्तम्यन्तपदानि रेखाङ्कितानि कुरुत।

## व्याकरणानुशीलनम्

अनुस्वारसन्धिः

भविष्यत्कालः (लृट्लकारः)

### १. नियमोदाहरणानुसारेण संशोधयत

नियमः

(अ) ..........म् + स्वरवर्णः = म्

(आ) ..........म् + व्यञ्जनवर्णः = अनुस्वारः ( ं)

यथा — भवनम् + अस्ति = भवनम् अस्ति।

कार्यम् + भवति = कार्यं भवति।

(क) पुस्तकम् + अस्ति = ..............................

(ख) मातरम् + वन्दे = ..............................

(ग) भ्रातरम् + रक्षामि = ..............................

(घ) पितरम् + नमामि = ..............................

(ङ) ज्ञानम् + आवश्यकम् = ..............................

### २. मञ्जूषास्थम् उदाहरणम् आधारीकृत्य वर्तमानकालस्य क्रियां भविष्यत्काले परिवर्तयत

| | |
|---|---|
| वदति | वदिष्यति |
| भवसि | .......... |
| चलामि | .......... |
| रक्षन्ति | .......... |
| त्यजामः | .......... |

| वर्तमानकालः | भविष्यत्कालः |
|---|---|
| पठति | पठिष्यति |
| पठतः | पठिष्यतः |
| पठन्ति | पठिष्यन्ति |
| पठसि | पठिष्यसि |
| पठथः | पठिष्यथः |
| पठथ | पठिष्यथ |
| पठामि | पठिष्यामि |
| पठावः | पठिष्यावः |
| पठामः | पठिष्यामः |

**श्रवणपाठः**

मूर्तिनिर्माणे आवश्यकी कुशलता मूर्तिकला उच्यते। धातुना, पाषाणेन, मृत्तिकया–काष्ठादिभिः च निर्मिता देवादीनाम् आकृतिः एव मूर्तिः कथ्यते । नेपालेऽपि प्राचीनकालाद् एव मूर्तेः निर्माणं विधीयमानं वर्तते । नेपाले मूर्तिकलायाः विकासः लिच्छविकालेऽभवत् । लिच्छविकाले निर्मितासु मूर्तिषु विरूपाक्षस्य, पलाञ्चोकभगवत्याः, चाँगुनारायणस्य च मूर्तयः प्रमुखाः सन्ति । मल्लकालेऽपि विविधाः मूर्तयः निर्मिताः दृश्यन्ते। अस्मिन् समये निर्मितासु मूर्तिषु फर्पिङस्थायाः महिषासुरमर्दिन्याः, बनेपास्थस्य सूर्यनारायणस्य, भक्तपुरस्य विष्णोः भैरवस्य च, हाँडीग्रामस्थायाः सरस्वत्याश्च मूर्तयः प्रमुखाः सन्ति । अधुनापि नेपाले मूर्तयः निर्मीयमाणाः सन्ति ।